॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

## समासः

केवलसमासः, अव्ययीभावः, तत्पुरुषः, बहुव्रीहिः, द्वन्द्वः, समासान्तः

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।




YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

16.05.2023

अस्माकं सम्पर्कसूत्राणि—

e-mail अणुवाक्— samskritsaarah@gmail.com

YOUTUBE — संस्कृतसारः @sanskrit sar

FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अथ समासाः
## (तत्रादौ केवलसमासः)



{मूलपाठः}

- समासः पञ्चधा। (सम्+असुँ <क्षेपणे>+ घञ् <भावे>)
- तत्र= पञ्चविधसमासेषु समसनं= एकस्यां वृत्तौ निक्षेपः (सङ्क्षेपः) समासः।
- स च विशेषसञ्ज्ञाविनिर्मुक्तः= अव्ययीभाव-तत्पुरुषादिसञ्ज्ञाभिः रहितः केवलसमासः= सामान्यसमासः प्रथमः॥ १॥
- प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः॥ २॥
- प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः॥ तत्पुरुषभेदः कर्मधारयः। कर्मधारयभेदो द्विगुः॥ ३॥
- प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः॥ ४॥
- प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः॥ ५॥

❑ यस्य पदार्थस्य क्रियया सह अन्वयो भवति तस्यार्थस्यैव प्राधान्यमत्र बोध्यम्। यथा— ‘सीतापतिः गच्छति’ इत्यत्र उत्तरपदस्य पतिपदस्यार्थ एव गमनक्रिययान्वेति, न तु सीतापदस्यार्थः।

केवलसमासः → अव्ययीभावः → तत्पुरुषः कर्मधारयः>द्विगुः → बहुव्रीहिः → द्वन्द्वः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# केवल-समासः

लघुसिद्धान्तकौमुद्याम् (केवलसमासः)

{मूलपाठः}

❖ परिभाषासूत्रम्—

**सूत्रम्— समर्थः पदविधिः (२,१.१)**

अर्थः— पदसंबन्धी यो विधिः स समर्थाश्रितो= परस्परान्वितार्थस्याश्रितो बोध्यः॥

❖ समाससञ्ज्ञाधिकारसूत्रम्—

**सूत्रम्— प्राक्कडारात्समासः (२,१.३)**

अर्थः— 'कडाराः कर्मधारय' इत्यतः प्राक् (वाऽऽहिताग्न्यादिषु सूत्रं यावत्) 'समास' इत्यधिक्रियते।

❖ केवल-समासविधायकं विधिसूत्रम्—

**सूत्रम्— सह सुपा (२,१.४)**

अर्थः— सुप् सुपा सह वा समस्यते॥

समासत्वात्प्रातिपदिकत्वेन सुँपो लुक्।

समर्थसुबन्तस्य पूर्व+ अम्



समर्थसुबन्तेन भूत+ सुँ

{मूलपाठः}

- प्रश्नः— का वृत्तिर्भवति ?
- उत्तरम्—परार्थाभिधानं वृत्तिः।

परश्चासौ अर्थः परार्थः। अभिधीयतेऽनेन इत्यभिधानम्। परार्थस्याभिधानं परार्थाभिधानं सैव वृत्तिः। परस्य= अन्यस्य एकार्थीभावरूपविशिष्टार्थस्य अभिधानं= कथनं यया क्रियते सा 'वृत्तिः'।

प्रश्नः— कति वृत्तयः भवन्ति ? काश्च ताः ?

- उत्तरम्— कृत्-तद्धित-समास-एकशेष-सनाद्यन्तधातुरूपाः पञ्च वृत्तयः।

*कृत्— कुम्भकारः इत्यत्र 'कुम्भ' इति पदं 'कार' इति पदेन सम्बद्धं सद्विशिष्टं 'कुलालम्' अर्थान्तरं बोधयति तेन इयं कृद्वृत्तिः। तद्धितः— शैवः, वैनतेयः इत्यादिः। समासः— राजपुरुषः, पीताम्बरः इत्यादिः। एकशेषः— पितरौ। सनाद्यन्तधातुः— जिगमिषति। पुत्रीयति। पुत्रकाम्यति इत्यादिषु।*

प्रश्नः— विग्रहः कः ?

- उत्तरम्— वृत्त्यर्थावबोधकं वाक्यं विग्रहः। (अवबोधकं= ज्ञापकम्)
- प्रश्नः— विग्रहः कतिविधः ?
- उत्तरम्— स च लौकिकोऽलौकिकश्चेति द्विधा।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# समासस्य पारिभाषिकशब्दावली

लघुसिद्धान्तकौमुद्याम्
(केवलसमासः)

{मूलपाठः}

- प्रश्नः— लौकिकविग्रहः कीदृशो भवति?
- उत्तरम्— तत्र 'पूर्वं भूत' इति लौकिकः।
- (लोके अर्थबोधनेच्छया प्रयुज्यमानो लौकिकः।)
- प्रश्नः— अलौकिकविग्रहः कीदृशो भवति?
- उत्तरम्— 'पूर्व+ अम् भूत+ सु' इत्यलौकिकः।
- (लोके प्रयोगानर्हः अलौकिकः। सूत्राणां प्रक्रिया निर्वाहकः अलौकिकः।)
- भूतपूर्वः। 'भूतपूर्वे चरडि'ति निर्देशात्पूर्वनिपातः।
- वार्तिकम्— इवेन समासो विभक्त्यलोपश्च।
- अर्थः— समर्थसुबन्तः 'इव' इति शब्देन सह समस्यते। किन्तु विभक्तेः लोपः न भवति।
- वागर्थौ इव= वागर्थाविव॥

॥ इति केवलसमासः॥ १॥

## समासस्य प्रक्रिया

| | |
|---|---|
| ०१ | सामर्थ्यं विचारणीयम्। |
| ०२ | लौकिकविग्रहः। |
| ०३ | अलौकिकविग्रहः। |
| ०४ | समासः। |
| ०५ | विभक्तिलोपः। |
| ०६ | उपसर्जन संज्ञा। पूर्वप्रयोगः। |
| ०७ | एकदेशविकृतन्यायेन पुनः प्रातिपदिकत्वम्।<br>▪ समासान्तप्रत्ययविचारः। |
| ०८ | लिङ्गवचनविचारः। |
| ०९ | समस्तपदाद् विभक्त्युत्पत्तिः। |

# विभक्त्यर्थादिषु अव्ययीभावसमासः



| | | | |
|---|---|---|---|
| ०१. | विभक्त्यर्थे (अधिकरणार्थे) | ११. | आनुपूर्व्यम् |
| ०२. | समीपः | १२. | यौगपद्यम् |
| ०३. | समृद्धिः | १३. | सादृश्यम् |
| ०४. | व्यृद्धिः | १४. | सम्पत्तिः |
| ०५. | अर्थाभावः | १५. | साकल्यम् |
| ०६. | अत्ययः | १६. | अन्तः |
| ०७. | असम्प्रति | | |
| ०८. | शब्दप्रादुर्भावः | | |
| ०९. | पश्चात् | | |
| १०. | यथा— योग्यता, वीप्सा, पदार्थानतिवृत्तिः, सादृश्यम्। | | |

**विग्रहः**

- **स्वपदविग्रहः** — समासघटकैः पदैः समासार्थस्य वर्णनम्।
- **अस्वपदविग्रहः** — समासाघटकैः अन्यैः पदैः सह समासार्थस्य वर्णनम्।

{मूलपाठः}

❖ अधिकारसूत्रम्—

**सूत्रम्**— अव्ययीभावः (२,१.५)

**अर्थः**— अधिकारोऽयं प्राक् तत्पुरुषात्॥

❖ समासविधायकं सूत्रम्—

**सूत्रम्**— अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्दप्रादुर्भाव-पश्चाद्- यथानुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्तवचनेषु (२,१.६)

**अर्थः**— विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते सोऽव्ययीभावः।

**प्रश्नः**— नित्यसमासः कीदृशः?

- उत्तरम्—प्रायेणाविग्रहो नित्यसमासः, प्रायेणास्वपदविग्रहो वा।
- विभक्तौ— हरि ङि अधि इति स्थिते—

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विभक्त्यर्थादिषु अव्ययीभावसमासः



## समासस्य प्रक्रिया

| | |
|---|---|
| ०१. | सामर्थ्य विचारणीयम्। |
| ०२. | लौकिकविग्रहः। |
| ०३. | अलौकिकविग्रहः। |
| ०४. | समासः। |
| ०५. | प्रातिपदिकसञ्ज्ञा। |
| ०६. | विभक्तिलोपः। |
| ०७. | उपसर्जन संज्ञा। पूर्वप्रयोगः। |
| ०८. | एकदेशविकृतन्यायेन पुनः प्रातिपदिकत्वम्।<br>▪ समासान्तप्रत्ययविचारः। |
| ०९. | लिङ्गवचनविचारः। |
| १०. | समस्तपदाद् विभक्त्युत्पत्तिः। |

लौकिकविग्रहः— हरौ
अलौकिकविग्रहः—
हरि+ ङि +अधि
समासः।
प्रातिपदिकसञ्ज्ञा।
विभक्तिलोपः।
हरि+ अधि
उपसर्जन संज्ञा।
पूर्वप्रयोगः।
अधि+हरि
एकदेशविकृतन्यायेन
पुनः प्रातिपदिकत्वम्।
लिङ्गवचनविचारः—
समस्तपदाद्
विभक्त्युत्पत्तिः
अधि+हरि+ सुँ
अव्यययीभावश्च
अव्ययदाप्सुपः

{मूलपाठः}

❖ उपसर्जनसञ्ज्ञासूत्रम्—

**सूत्रम्**— प्रथमानिर्दिष्टं समास उपसर्जनम् (१,२.४३)

**अर्थः**— समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्॥

❖ पूर्वप्रयोगविधायकं विधिसूत्रम्—

**सूत्रम्**— उपसर्जनं पूर्वम् (२,२.३०)

**अर्थः**— समासे उपसर्जनं प्राक्प्रयोज्यम्।

- इत्यधेः प्राक् प्रयोगः।
- सुँपो लुक्।
- एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः।
- 'अव्ययीभावश्चे'त्यव्ययत्वात्सुँपो लुक्।
- अधिहरि॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विभक्त्यर्थादिषु अव्ययीभावसमासः



- लौकिकविग्रहः— गोपि
- अलौकिकविग्रहः— गोपा+ ङि +अधि
- समासः। प्रातिपदिकसञ्ज्ञा। विभक्तिलोपः। गोपा+ अधि
  - उपसर्जन संज्ञा। पूर्वप्रयोगः। अधि+ गोपा
    एकदेशविकृतन्यायेन पुनः प्रातिपदिकत्वम्।
- लिङ्गवचनविचारः— अधिगोपा (अव्ययीभावश्च)
  - अधिगोप (ह्रस्वो नपुंसके प्रातिपदिकस्य)
  - समस्तपदाद् विभक्त्युत्पत्तिः अधिगोप+ सुँ
- अधिगोप+ अम् (नाव्ययीभावादतोऽम्त्वपञ्चम्याः)

अधिगोपम्

{मूलपाठः}

❖ नपुंसकलिङ्गविधायकं सञ्ज्ञासूत्रम्—

सूत्रम्— अव्ययीभावश्च (२,४.१८)

अर्थः— अयं नपुंसकं स्यात्॥

❖ सुपां लुक्-निषेधकम् अमादेशविधायकञ्च विधिसूत्रम्—

सूत्रम्— नाव्ययीभावादतोऽम्त्वपञ्चम्याः (२,४.८३)

अर्थः— अदन्तादव्ययीभावात्सुँपो न लुक्, तस्य पञ्चमीं विना अमादेशश्च स्यात्॥

○ विभक्तौ २— गाः पातीति गोपाः, 'तस्मिन्नि'ति (गोपि इति) अधिगोपम्॥

❖ बहुलेन अमादेशविधायकं विधिसूत्रम्—

सूत्रम्— तृतीयासप्तम्योर्बहुलम् (२,४.५४)

अर्थः— अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात्। [१]अधिगोपम्, अधिगोपेन, अधिगोपे वा।

१.चेन्नै संस्करणे भैमीव्याख्याने चात्र पाठभेदो दृश्यते।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अदन्त-अधिगोपशब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अव्ययीभावः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अधिगोपम् | अधिगोपम् | अधिगोपम् |
| सम्बोधनम् | अधिगोपम् | अधिगोपम् | अधिगोपम् |
| द्वितीया | अधिगोपम् | अधिगोपम् | अधिगोपम् |
| तृतीया | अधिगोपम्, अधिगोपेन | अधिगोपम्, अधिगोपाभ्याम् | अधिगोपम्, अधिगोपैः |
| चतुर्थी | अधिगोपम् | अधिगोपम् | अधिगोपम् |
| पञ्चमी | अधिगोपात्-द् | अधिगोपाभ्याम् | अधिगोपेभ्यः |
| षष्ठी | अधिगोपम् | अधिगोपम् | अधिगोपम् |
| सप्तमी | अधिगोपम्, अधिगोपे | अधिगोपम्, अधिगोपयोः | अधिगोपम्, अधिगोपेषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विभक्त्यर्थादिषु अव्ययीभावसमासः

लघुसिद्धान्तकौमुद्याम् (अव्ययीभावः)

## समासस्य प्रक्रिया

| | |
|---|---|
| ०१. | सामर्थ्य विचारणीयम्। |
| ०२. | लौकिकविग्रहः। |
| ०३. | अलौकिकविग्रहः। |
| ०४. | समासः। |
| ०५. | प्रातिपदिकसञ्ज्ञा। |
| ०६. | विभक्तिलोपः। |
| ०७. | उपसर्जन संज्ञा। पूर्वप्रयोगः। |
| ०८. | एकदेशविकृतन्यायेन पुनः प्रातिपदिकत्वम्।<br>▪ समासान्तप्रत्ययविचारः। |
| ०९. | लिङ्गवचनविचारः। |
| १०. | समस्तपदाद् विभक्त्युत्पत्तिः। |

कृष्ण+ ङस् +उप
मद्र+ आम् +सु
यवन+ आम् +दुर्
मक्षिका+ आम् +निर्
हिम+ ङस् + अति
निद्रा+ ङस् + अति
हरि+ ङस् + इति
विष्णु+ ङस् + अनु

रूप+ ङस् + अनु
अर्थ+ अम् + प्रति
शक्ति+ ङस् + यथा

{मूलपाठः}

- समीपः — कृष्णस्य समीपम् उपकृष्णम्।
- समृद्धिः— मद्राणां समृद्धिः सुमद्रम्[१]।
- व्यृद्धिः — यवनानां व्यृद्धिर्दुर्यवनम्।
- अर्थाभावः — मक्षिकाणामभावो निर्मक्षिकम्।
- अत्ययः — हिमस्यात्ययोऽतिहिमम्।
- असम्प्रति — निद्रा सम्प्रति न युज्यत इत्यतिनिद्रम्।
- शब्दप्रादुर्भावः — हरिशब्दस्य प्रकाश इतिहरि।
- पश्चात् — विष्णोः पश्चादनुविष्णु।
- यथा — योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः।

▲योग्यता— रूपस्य योग्यमनुरूपम्। ▲वीप्सा— अर्थमर्थं प्रति प्रत्यर्थम्।▲ पदार्थानतिवृत्तिः— शक्तिमनतिक्रम्य यथाशक्ति॥

१.सम्मद्रम् इति बालमनोरमा सम्मतः पाठः।

# अदन्त-उपकृष्णशब्दस्य रूपाणि



| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | उपकृष्णम् | उपकृष्णम् | उपकृष्णम् |
| सम्बोधनम् | उपकृष्णम् | उपकृष्णम् | उपकृष्णम् |
| द्वितीया | उपकृष्णम् | उपकृष्णम् | उपकृष्णम् |
| तृतीया | उपकृष्णम्, उपकृष्णेन | उपकृष्णम्, उपकृष्णाभ्याम् | उपकृष्णम्, उपकृष्णैः |
| चतुर्थी | उपकृष्णम् | उपकृष्णम् | उपकृष्णम् |
| पञ्चमी | उपकृष्णात्-द् | उपकृष्णाभ्याम् | उपकृष्णेभ्यः |
| षष्ठी | उपकृष्णम् | उपकृष्णम् | उपकृष्णम् |
| सप्तमी | उपकृष्णम्, उपकृष्णे | उपकृष्णम्, उपकृष्णयोः | उपकृष्णम्, उपकृष्णेषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विभक्त्यर्थादिषु अव्ययीभावसमासः



| | |
|---|---|
| ०१. | विभक्त्यर्थे— अधिहरि, अधिगोपम् |
| ०२. | समीपः— उपकृष्णम् |
| ०३. | समृद्धिः— सुमद्रम् |
| ०४. | व्यृद्धिः— दुर्यवनम् |
| ०५. | अर्थाभावः— निर्मक्षिकम् |
| ०६. | अत्ययः— अतिहिमम् |
| ०७. | असम्प्रति— अतिनिद्रम् |
| ०८. | शब्दप्रादुर्भावः— इतिहरि |
| ०९. | पश्चात्— अनुविष्णु |
| १०. | ❖ यथा<br>योग्यता— अनुरूपम्<br>वीप्सा— प्रत्यर्थम्<br>पदार्थानतिवृत्तिः— यथाशक्ति<br>सादृश्यम्— सहरि |

हरि+ टा + सह

ज्येष्ठ+ ङस् + अनु

चक्र+ टा + सह

सखि+ टा + सह

क्षत्र+ आम् + सह

तृण+ टा + सह

अग्नि+ टा + सह

{मूलपाठः}

❖ सादेशविधायकं विधिसूत्रम्—

**सूत्रम्— अव्ययीभावे चाकाले (६,३.८१)**

**अर्थः— सहस्य सः स्यादव्ययीभावे न तु काले।**

▲ **पदार्थानतिवृत्तिः— हरेः सादृश्यं सहरि।**

- **आनुपूर्व्यम्— ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्।**
- **यौगपद्यम्— चक्रेण युगपत् सचक्रम्।**
- **सादृश्यम्— सदृशः सख्या ससखि।**
- **सम्पत्तिः— क्षत्राणां संपत्तिः सक्षत्रम्।**
- **साकल्यम्— तृणमप्यपरित्यज्य सतृणमत्ति।**
- **अन्तः— अग्निग्रन्थपर्यन्तमधीते साग्नि॥**

| | |
|---|---|
| ११. | आनुपूर्व्यम्— अनुज्येष्ठम् |
| १२. | यौगपद्यम्— सचक्रम् |
| १३. | सादृश्यम्— ससखि |

| | |
|---|---|
| १४. | सम्पत्तिः— सक्षत्रम् |
| १५. | साकल्यम्— सतृणम् |
| १६. | अन्तः— साग्नि |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नद्यर्थकपदैः सह अव्ययीभावसमासः

लघुसिद्धान्तकौमुद्याम् (अव्ययीभावः)

- लौकिकविग्रहः— पञ्चानां गङ्गानां समाहारः।
- अलौकिकविग्रहः— पञ्चन्+ आम् + गङ्गा + आम्
- समासः। प्रातिपदिकसञ्ज्ञा। विभक्तिलोपः। पञ्चन् + गङ्गा
- उपसर्जन सञ्ज्ञा। पूर्वप्रयोगः। न लोपः। पञ्च + गङ्गा
  एकदेशविकृतन्यायेन पुनः प्रातिपदिकत्वम्।
  - लिङ्गवचनविचारः— पञ्चगङ्गा (अव्ययीभावश्च)
    - पञ्चगङ्ग (ह्रस्वो नपुंसके प्रातिपदिकस्य)
  - समस्तपदाद् विभक्त्युत्पत्तिः— पञ्चगङ्ग + सुँ
  - पञ्चगङ्ग + अम् (नाव्ययीभावादतोऽम्त्वपञ्चम्याः)

**पञ्चगङ्गम्**

❖ समासविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— नदीभिश्च (२,१.२०)**

अर्थः— नदीभिः सह सङ्ख्या समस्यते।

भाष्येष्टिः— समाहारे चायमिष्यते।

अर्थः— अयं समासः समाहार एव भवति।

○ पञ्चगङ्गम्। द्वियमुनम्॥

- लौकिकविग्रहः— द्वयोर्यमुनयोः समाहारः।
- अलौकिकविग्रहः— द्वि+ ओस् + यमुना + ओस्

द्वि + यमुना

द्वि + यमुन

द्वि + यमुन+अम्

**द्वियमुनम्**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अव्ययीभावसमासे समासान्त-टच्-प्रत्ययः

लघुसिद्धान्तकौमुद्याम् (अव्ययीभावः)

- ❑ लौकिकविग्रहः— शरदः समीपम्
- ❑ अलौकिकविग्रहः— शरद्+ ङस् + उप
- ❑ समासः। प्रातिपदिकसञ्ज्ञा। विभक्तिलोपः। शरद् + उप
- ❑ उपसर्जन संज्ञा। पूर्वप्रयोगः। न लोपः। उप+ शरद्
- ❑ एकदेशविकृतन्यायेन पुनः प्रातिपदिकत्वम्।
- ❑ समासान्तप्रत्ययः,लिङ्गवचनविचारः—
- ❑ उपशरद्+टच् (अव्ययीभावे शरत्प्रभृतिभ्यः)
- ❑ उपशरद्+ अ (अव्ययीभावश्च)
- ❑ समस्तपदाद् विभक्त्युत्पत्तिः— उपशरद् + सुँ
- ❑ उपशरद + अम् (नाव्ययीभावादतोऽम्त्वपञ्चम्याः)

**उपशरदम्**

{मूलपाठः}

❖ तद्धिताधिकारसूत्रम्—

**सूत्रम्— तद्धिताः (४,१.७६)**

**अर्थः—** आपञ्चमसमाप्तेरधिकारोऽयम्॥

❖ समासान्त-टच्-विधायकं विधिसूत्रम्—

**सूत्रम्— अव्ययीभावे शरत्प्रभृतिभ्यः (५,४.१०७)**

**अर्थः—** शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे।

- ○ शरदः समीपम्—उपशरदम्।
- ○ प्रतिविपाशम्।

**गणसूत्रम्— जराया जरश्च।**

- ○ उपजरसमित्यादि॥

- ❑ विपाशं विपाशं प्रति।
- ❑ विपाश्+ अम्+ प्रति

- ❑ प्रतिविपाश्+ अ(टच्)

प्रतिविपाशम्

- ❑ जरायाः समीपम्
- ❑ जरा+ ङस्+ उप

- ❑ उप जरस्+ अ(टच्)

उपजरसम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अव्ययीभावसमासे समासान्त-टच्-प्रत्ययः

लघुसिद्धान्तकौमुद्याम् (अव्ययीभावः)

- राज्ञः समीपम्
- राजन्+ ङस्+ उप
- उप+राजन्+ अ (टच्)
- उपराज्+ अ
- उपराज+ स्
- उपराज+ अम्

उपराजम्

- आत्मनि इति
- आत्मन्+ ङि+ अधि
- अधि+आत्मन्+ अ (टच्)
- अध्यात्म्+ अ
- अध्यात्म + स्
- अध्यात्म + अम्

अध्यात्मम्

- चर्मणः समीपम्
- चर्मन्+ ङस्+ उप
- उप+चर्मन्+ अ (टच्)

उपचर्मम्।

टजभावे नलोपः— उपचर्म

- समिधः समीपम्
- समिध्+ ङस्+ उप
- उप+ समिध्+ अ (टच्)

उपसमिधम्

टजभावे — उपसमित्-द्

{मूलपाठः}

❖ समासान्त-टच्-विधायकं विधिसूत्रम्—

सूत्रम्— अनश्च (५,४.१०८)

अर्थः— अन्नन्तादव्ययीभावाट्टच् स्यात्॥

❖ टिलोपविधायकं विधिसूत्रम्—

सूत्रम्— नस्तद्धिते (६,४.१४४)

अर्थः— नान्तस्य भस्य टेर्लोपस्तद्धिते।

○ उपराजम्। अध्यात्मम्॥

❖ विकल्पेन समासान्त-टच्-विधायकं विधिसूत्रम्—

सूत्रम्— नपुंसकादन्यतरस्याम् (५,४.१०९)

अर्थः— अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात्।

○ उपचर्मम्। उपचर्म॥

❖ विकल्पेन समासान्त-टच्-विधायकं विधिसूत्रम्—

सूत्रम्— झयः (५,४.१११)

अर्थः— झयन्तादव्ययीभावाट्टज्वा स्यात्।

○ उपसमिधम्। उपसमित्॥

॥ इत्यव्ययीभावः॥ २॥

# अव्ययीभावस्य परीक्षणम्

**प्रश्नः०१.एतेषु अधिकारसूत्रं नास्ति?**

क. अव्ययीभावः

ख. तद्धिताः

**ग. अव्ययीभावश्च**

घ. प्राक्कडारात्समासः

**प्रश्नः ०२. अव्ययं विभक्तिसमीपसमृद्धि इत्यादि सूत्रे प्रथमान्तं पदं किम्?**

**क.अव्ययम्**

ख. विभक्तिः

ग. शाकल्यम्

घ. शब्दप्रादुर्भावः

**प्रश्नः ०३. अधिगोपम् इत्युदाहरणं वर्तते—**

क. समीपार्थस्य

**ख.विभक्त्यर्थस्य**

ग. व्यापकार्थस्य

घ. यथार्थस्य

**प्रश्नः ०४. प्रथमानिर्दिष्टं समास उपसर्जनम् इति सूत्रेण कस्योपसर्जनसञ्ज्ञा भवति—**

क. समासस्य

ख. समासविधायकसूत्रे प्रथमान्तस्य

**ग. समासविधायकसूत्रघटकप्रथमान्तपदजन्यबोधविषयार्थस्य लक्ष्यस्थस्य पदस्य**

घ. अलौकिकविग्रहवाक्ये प्रथमान्तस्य पदस्य

**प्रश्नः ०५. अस्य सूत्रस्य शुद्धस्वरूपं किम्?**

क. अव्ययं विभक्ति-समीप-समृद्धि-वृद्धर्थाभावात्ययासम्प्रति-शब्दप्रादुर्भाव-पश्चाद्- यथानुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्तवचनेषु|

ख. अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्दप्रादुर्भाव-पश्चाद्-यथानुपूर्व्य-यौगपद्य-सादृश्य –साकल्यान्तवचनेषु

**ग. अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्दप्रादुर्भाव-पश्चाद्-यथानुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्तवचनेषु**

घ. अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थायासम्प्रति-शब्दप्रादुर्भाव-पश्चाद्- यथानुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्तवचनेषु

**प्रश्नः ०६. अदन्ताव्ययीभावे कुत्र अमादेशो न भवति—**

**क. पञ्चम्याम्**

ख. तृतीयायाम्

ग. सप्तम्याम्

घ. प्रथमायाम्

**प्रश्नः ०७. 'अधिगोप' इत्यस्य षष्ठी बहुवचने किं रूपम् ?**

क. अधिगोपाम्

ख. अधिगोपानाम्

ग. अधिगोपाणाम्

**घ. अधिगोपम्**

**प्रश्नः ०८. 'इतिहरि' इत्युदाहरणं वर्तते—**

क. असम्प्रतिः

ख. पश्चात्

ग. पदार्थानतिवृत्तिः

**घ. शब्दप्रादुर्भावः**

**प्रश्नः ०९. यथार्थाः कति भवन्ति—**

क. एकः

ख. द्वौ

ग. त्रयः

घ. चत्वारः

**प्रश्नः १०. एतेष्वशुद्धं चिनुत—**

क. निर्मक्षिकम्

ख. प्रत्यर्थम्

**ग. यथाशक्तिः**

घ. सहरि

**प्रश्नः ११. एतेष्वशुद्धं मेलनं चिनुत—**

**क. साकल्यम्— यथाशक्ति**

ख. व्यृद्धिः— दुर्यवनम्

ग. वीप्सा— प्रत्यर्थम्

घ. पदार्थानतिवृत्तिः— यथाशक्ति

**प्रश्नः १२. चक्र+ टा + सह इत्यस्य समासे कृते किं रूपम्—**

क. चक्रसहम्

ख. सहचक्रम्

**ग. सचक्रम्**

घ. चक्रधरम्

**प्रश्नः १३. अग्निग्रन्थपर्यन्तमधीते इति विग्रहवाक्ये किं रूपम्—**

क. पर्यग्नि

ख. पर्याग्नि

**ग. साग्नि**

घ. अग्न्यधि

**प्रश्नः १४. अव्ययं विभक्ति....इत्यादि सूत्रे पठिताः विभक्त्याद्यर्थाः कति सन्ति—**

क. त्रयोदश

**ख.षोडश**

ग. पञ्चदश

घ. विंशतिः

**प्रश्नः १५. एतेषु सादेशविधायकं सूत्रं किम्—**

**क.अव्ययीभावे चाकाले**

ख. नदीभिश्च

ग. अव्ययीभावश्च

घ. अव्ययीभावः

**प्रश्नः १६. 'पञ्चगङ्गम्' इत्यस्य समीचीनं लौकिकं विग्रहवाक्यं किम्—**

क. पञ्चानां गङ्गानां समीपम्।

**ख.पञ्चानां गङ्गानां समाहारः**

ग. पञ्च ताः गङ्गा

घ. पञ्चसु गङ्गासु मध्ये

**प्रश्नः १७. 'द्वियमुनम्' इत्यत्र यमुनाशब्दस्य ह्रस्वः केन—**

क. अव्ययीभावश्च

**ख.ह्रस्वो नपुंसके प्रातिपदिकस्य**

ग. उपसर्जनं ह्रस्वः

घ. स्त्रियाः पुंवत्......।

**प्रश्नः १८. ' तद्धिताः' इत्यस्याधिकारः कस्मिन्नध्यायपर्यन्तम्—**

क. ४

**ख.५**

ग. ३

घ. ६

**प्रश्नः १९. अव्ययीभावे अयं समासान्तप्रत्ययो भवति—**

क. अच्

ख. कप्

**ग. टच्**

घ. आ

**प्रश्नः २०. 'उपसमिधम्' इत्यत्र समासान्तप्रत्ययविधायकं सूत्रं किम्—**

क. अनश्च

ख. नपुंसकादन्यतरस्याम्

ग. नस्तद्धिते

**घ. झयः**

**प्रश्नः २१. 'उपसमित्' इत्यस्य विग्रहवाक्यं किम्—**

**क. समिधः समीपम्**

ख. समितः समीपम्

ग. समिधा समीपम्

घ. समितेः समीपम्

**प्रश्नः २२. 'प्रतिविपाशम्' इत्यत्र कस्मिन्नर्थे समासः—**

क. प्रत्यर्थे

**ख. वीप्सार्थे**

ग. साकल्यार्थे

घ. समृद्ध्यर्थे

**प्रश्नः २३. 'अन्'अन्तक्लीबशब्देषु टज्विधायकं सूत्रं किम्—**

क. अनश्च

**ख. नपुंसकादन्यतरस्याम्**

ग. नस्तद्धिते

घ. झयः

**प्रश्नः २४. एकदेशविकृतन्यायेन पुनः प्रातिपदिकत्वं केन सूत्रेण—**

**क. कृत्तद्धितसमासाश्च।**

ख. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।

ग. अव्ययं विभक्ति.....।

घ. स्वत एव।

**प्रश्नः २५. अव्ययीभावसमासविषये इदं कथनम् असमीचीनम्—**

क. प्रायः अधिकरणविभक्त्यर्थे अयं प्रवर्तते।

ख. नदीवाचिनां सङ्ख्याशब्दैस्सह समासोऽत्र भवति।

**ग. 'प्रायः' अर्थे अयं समासः भवति।**

घ. 'अध्यात्मम्' इत्यत्र टच् भवति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तत्पुरुषस्य भेदाः

लघुसिद्धान्तकौमुद्याम्
(तत्पुरुषसमासः)



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

तस्य पुरुषः → **तत्पुरुषः** ← सः पुरुषः

**लघुसिद्धान्तकौमुद्याम्**
**(तत्पुरुषसमासः)**

## व्यधिकरणः

तत्पुरुषोऽष्टविधोऽभूत् प्रथमादिविभक्तिनञ्कृतैर्भेदै।
उत्तरपदजनितार्थो मुख्यस्तत्रेति पण्डितैः ख्यातः॥

| |
|---|
| १. प्रथमा/एकदेशीतत्पुरुषः— पूर्वकायः। |
| २. द्वितीयातत्पुरुषः—कृष्णाश्रितः। |
| ३. तृतीयातत्पुरुषः— शङ्कुलाखण्डः। |
| ४. चतुर्थीतत्पुरुषः— यूपदारु। |
| ५. पञ्चमीतत्पुरुषः— चौरभयम्। |
| ६. षष्ठीतत्पुरुषः— राजपुरुषः। |
| ७. सप्तमीतत्पुरुषः— अक्षशौण्डः। |
| ८. नञ्तत्पुरुषः— अब्राह्मणः। |
| ९. अलुक्-तत्पुरुषः— युधिष्ठिरः |

## समानाधिकरणः

विशेषणं पूर्वपदे विशेष्यं तथोभयत्रापि विशेषणं च।
यस्योपमानं परस्तदादौ सम्भावना चाप्यवधारणा च॥

| |
|---|
| १. विशेषणपूर्वपदः— पीताम्बरः। |
| २. विशेष्यपूर्वपदः— वैयाकरणखसूची। |
| ३. विशेषणोभयपदः— स्नातानुलिप्तः |
| ४. उपमानपूर्वपदः— घनश्यामः। |
| ५. उपमानोत्तरपदः— पुरुषव्याघ्रः। |
| ६. सम्भावनापूर्वपदः— गुणबुद्धिः। |
| ७. अवधारणपूर्वपदः— विद्याधनम् |

कविभिः सप्तविधः स्यादित्येव कर्मधारयः कथितः।
तत्पुरुषान्तर्भावात् तद्वत् प्राधान्यमीरितं चास्य॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# द्वितीया तत्पुरुषः

लघुसिद्धान्तकौमुद्याम्
(तत्पुरुषसमासः)

## लौकिकविग्रहः

१.कृष्णं श्रितः= कृष्णश्रितः
२.दुःखमतीतः= दुःखातीतः
३. अग्निं पतितः= अग्निपतितः
४. प्रलयं गतः= प्रलयगतः
५. मेघमत्यस्तः= मेघात्यस्तः
६. जीवनं प्राप्तः= जीवनप्राप्तः
७. कष्टमापन्नः= कष्टापन्नः

## अलौकिकविग्रहः

१. कृष्ण अम्+ श्रित सुँ
२. दुःख अम्+ अतीत सुँ
३. अग्नि अम्+ पतित सुँ
४. प्रलय अम्+ गत सुँ
५. मेघ अम्+ अत्यस्त सुँ
६. जीवन अम्+ प्राप्त सुँ
७. कष्ट अम्+ आपन्न सुँ

{मूलपाठः}

❖ अधिकारसूत्रम्—

**सूत्रम्— तत्पुरुषः (२,१.२२)**

अर्थः— अधिकारोऽयं प्राग्बहुव्रीहेः॥

❖ द्विगुसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— द्विगुश्च (२,१.२३)**

अर्थः— द्विगुरपि तत्पुरुषसञ्ज्ञकः स्यात्॥

❖ द्वितीयासमासविधायकं विधिसूत्रम्—

**सूत्रम्— द्वितीया श्रितातीत-पतित-गतात्यस्त-प्राप्तापन्नैः (२,१.२४)**

अर्थः— द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः।

- कृष्णं श्रितः कृष्णश्रित इत्यादि॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तृतीया तत्पुरुषः

**लघुसिद्धान्तकौमुद्याम्**
**(तत्पुरुषसमासः)**

शङ्कुला टा + खण्ड सुँ
शङ्कुलाखण्डः

धान्य टा + अर्थ सुँ
धान्यार्थः

हरि टा + त्रात सुँ
**हरित्रातः**
नख टा + भिन्न सुँ
**नखभिन्नः**
नख टा + निर् भिन्न सुँ
**नखनिर्भिन्नः**

{मूलपाठः}

❖ तृतीयासमासविधायकं विधिसूत्रम्—

**सूत्रम्— तृतीया तत्कृतार्थेन गुणवचनेन (२,१.३०)**

**अर्थः—** तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत्।

- शङ्कुलया खण्डः= शङ्कुलाखण्डः ।
- धान्येनार्थो= धान्यार्थः।
- तत्कृतेति किम् ? अक्ष्णा काणः॥

❖ तृतीयासमासविधायकं विधिसूत्रम्—

**सूत्रम्— कर्तृकरणे कृता बहुलम् (२,१.३२)**

**अर्थः—** कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्।

- हरिणा त्रातो= हरित्रातः।
- नखैर्भिन्नः= नखभिन्नः।

**परिभाषा—** कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्।

- नखनिर्भिन्नः॥

✓ **तृतीयान्तं पदम्= शङ्कुलया इति। तृतीयान्तार्थः= शङ्कुलारूपास्त्रकरणम् (पूगकर्तरी, सरौता)। (तृतीयान्तार्थेन कृतः गुण) तेन कृतः गुणः= खण्डक्रियारूपः। तद्वाचकं पदं खण्डपदं तत्प्रकृतिकेन सुबन्तेन प्रकृते खण्डपदेन) सह तृतीयान्तसमर्थसुबन्तस्य (प्रकृते 'शङ्कुला टा' इत्यस्य) समासो भवति स च तत्पुरुषः।**

✓ **तृतीयान्तसमर्थसुबन्तस्य अर्थशब्देन सहसमासो भवति स च तत्पुरुषः।**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# चतुर्थी-तत्पुरुषः

**लघुसिद्धान्तकौमुद्याम्**
**(तत्पुरुषसमासः)**







{मूलपाठः}

❖ चतुर्थीसमासविधायकं विधिसूत्रम्—

**सूत्रम्— चतुर्थी तदर्थार्थ-बलि-हित-सुख-रक्षितैः (२,१.३६)**

**अर्थः—** चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्।

- यूपाय दारु= यूपदारु।

**भाष्यवचनम्—** तदर्थेन प्रकृतिविकृतिभाव एवेष्टः।

- तेनेह न – रन्धनाय स्थाली।

**वार्तिकम्—** अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्।

**अर्थः—** अर्थशब्देन चतुर्थ्यन्तसमर्थसुबन्तस्य नित्यसमासः भवति तथा परवल्लिङ्गतां प्रबाध्य विशेष्यनुसारं समस्तपदस्य लिङ्गनिर्धारणं भवति।

- द्विजाय अयम् — द्विजार्थः सूपः। द्विजाय इयम् — द्विजार्था यवागूः। द्विजाय इदम् — द्विजार्थं पयः।
- भूताय बलिः — भूतबलिः। गवे हितम् — गोहितम्। गवे सुखम् — गोसुखम्। गवे रक्षितम् — गोरक्षितम्॥

✓ चतुर्थ्यन्तं= यूपाय इति। तदर्थो यज्ञस्तम्भरुपः, तदर्थं यत् (दारु)काष्ठम्, तद्वाचकः शब्दः= दारुशब्दः तेन शब्देन सह चतुर्थन्तस्य यूपशब्दस्य समासः।

✓ तथा चतुर्थन्तस्य समर्थसुबन्तस्य अर्थ-बलि-हित-सुख-रक्षितः एभिः पदैः सह समासो भवति स च तत्पुरुषः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पञ्चमी-तत्पुरुषः



स्तोकम्= अल्पः
अन्तिकम्= समीपम्।
दूरम्= दूरम्

कृच्छ्रम्= कष्टम्

चोर ङसिँ + भय सुँ
चोरभयम्

स्तोकान्मुक्तः
स्तोक ङसिँ + मुक्त सुँ
स्तोकात्+ मुक्तः
स्तोकाद्+ मुक्तः
स्तोकान्मुक्तः , स्तोकाद्मुक्तः
(यरोनुनासिकेऽनुनासिके वा)

{मूलपाठः}

❖ पञ्चमीसमासविधायकं विधिसूत्रम्—

**सूत्रम्— पञ्चमी भयेन (२,१.३७)**

अर्थः— पञ्चम्यन्तं सुबन्तं भयार्थकप्रकृतिकेन सुबन्तेन वा समस्यते, स च तत्पुरुषः।

- चोराद्भयं= चोरभयम्॥

❖ पञ्चमीसमासविधायकं विधिसूत्रम्—

**सूत्रम्— स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन (२,१.३९)**

अर्थः— स्तोक-अन्तिक-दूर- एतदर्थकानि पञ्चम्यन्तानि पदानि तथा कृच्छ्र-प्रकृतिकं पञ्चम्यन्तं पदं क्तान्तप्रकृतिकेन सुबन्तेन वा समस्यते, स च तत्पुरुषः।

❖ अलुग्विधायकं विधिसूत्रम्—

**सूत्रम्— पञ्चम्याः स्तोकादिभ्यः (६,३.२)**

अर्थः— स्तोकादिभ्यः परा या पञ्चमी तस्याः अलुक् (स्यात्) उत्तरपदे (परतः)।

- स्तोकान्मुक्तः। (अल्पान्मुक्तः)
- अन्तिकादागतः। अभ्याशादागतः।
- दूरादागतः। (विप्रकृष्टादागतः)
- कृच्छ्रादागतः॥

चेन्नैसंस्करणेऽयमधिकः पाठः

वार्तिकम्— भय-भीत-भीति-भीभिरिति वाच्यम्।

- वृकभीत इत्यादि।

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# षष्ठी-तत्पुरुषः

लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

❖ षष्ठीसमासविधायकं विधिसूत्रम्— {मूलपाठः}

सूत्रम्— षष्ठी (२,२.८)

अर्थः— षष्ठ्यन्तं समर्थेन सुबन्तेन प्राग्वत्= वा समस्यते तत्पुरुषश्च भवति ।

○ राजपुरुषः ॥

राज्ञः पुरुषः

राजन् ङस् + पुरुष सुँ

राजन्+ पुरुष

राज+ पुरुष

(नलोपः प्रातिपदिकान्तस्य)

राजपुरुष +सुँ

राजपुरुषः





पिप्पली= पीपर/पीपली

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# एकदेशी/ अवयवावयवी-तत्पुरुषः

लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

पूर्वं कायस्य

पूर्व अम् + काय ङस्
अवयवी

पूर्व+ काय

**पूर्वकायः**

**अपरकायः**

**अधरकायः**

**उत्तरकायः**

अर्धं पिप्पल्याः

अर्ध सुँ + पिप्पली ङस्

अर्ध+ पिप्पली

**अर्धपिप्पली**

{मूलपाठः}

❖ एकदेशीसमासविधायकं विधिसूत्रम्—

सूत्रम्— पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे (२,२.१)

पदच्छेदः— पूर्व-अपर-अधर-उत्तरम्, एकदेशिना, एकाधिकरणे।

अर्थः— अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी।

- षष्ठीसमासापवादः।
- पूर्वं कायस्य= पूर्वकायः।
- अपरकायः।
- एकाधिकरणे किम् ? पूर्वश्छात्राणाम्॥

एकदेशः= अवयवः, एकदेशी=अवयवी।

❖ एकदेशीसमासविधायकं विधिसूत्रम्—

सूत्रम्— अर्धं नपुंसकम् (२,२.२)

पुंस्यर्धोऽर्धं समेंऽशके— इत्यमरः।

अर्थः— समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत्।

- अर्धं पिप्पल्याः= अर्धपिप्पली।

# सप्तमी-तत्पुरुषः






{मूलपाठः}

❖ सप्तमीसमासविधायकं विधिसूत्रम्—

**सूत्रम्— सप्तमी शौण्डैः (२,१.४०)**

**अर्थः—** सप्तम्यन्तं शौण्डादिभिः प्राग्वत्।

- अक्षेषु शौण्डः= अक्षशौण्ड इत्यादि।
- द्वितीयातृतीयेत्यादियोगविभागाद् अन्यत्रापि= सूत्रोक्तातिरिक्तस्थलेऽपि द्वितीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः॥

योगस्य= सूत्रस्य विभागः= विभज्य पठनम् इति योगविभागः।

**सूत्रम्— सिद्धशुष्कपक्वबन्धैश्च।**

- साङ्काश्यसिद्धः। आतपशुष्कः।
- स्थालीपक्वः। चक्रबन्धः।

**सूत्रम्— ध्वाङ्क्षेण क्षेपे।**

- तीर्थध्वाङ्क्षः।
- तीर्थकाकः।

**अक्षेषु शौण्डः**

**अक्ष सुप् + शौण्ड सुँ**

**अक्ष + शौण्ड**

**अक्षशौण्डः**



अक्षः= पाशकः, शौण्डः= प्रवीणः।




वार्तिकम्— गम्यादीनाम् उपसङ्ख्यानम्।

- ग्रामगमी
- नगरगामी
- अन्नबुभुक्षुः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लघुसिद्धान्तकौमुद्याम्
## (तत्पुरुषसमासः)

**सूत्रम्— कर्तृकरणे कृता बहुलम्।**
- हरित्रातः
- नखभिन्नः

**सूत्रम्— कृत्यैरधिकार्थवचने।**
- वातच्छेद्यं तृणम्।
- काकपेया नदी

# तृतीया-समासः

- तत्कृतार्थेन गुणवचनेन
- अर्थः
- पूर्वः
- सदृशः
- समः
- ऊनार्थः
- कलहः
- मिश्रः
- श्लक्ष्णः
- अवरः

**सूत्रम्— अन्नेन व्यञ्जनम्।**
- दध्योदनः

**सूत्रम्— भक्ष्येण मिश्रीकरणम्।**
- गुणधानाः


संस्कृतसारः
छिद्यन्ते सर्वसंशयाः
लघुसिद्धान्तकौमुद्याम्
(तत्पुरुषसमासः)
बलिः
हितम्
अर्थः
सुखम्
तदर्थः
चतुर्थी-
समासः
रक्षितम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

लघुसिद्धान्तकौमुद्याम्
(तत्पुरुषसमासः)




सूत्रम्— शतसहस्रौ परेणेति वक्तव्यम्।
- परश्शताः। परस्सहस्राः।

सूत्रम्— स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन।
- स्तोकान्मुक्तः

# सञ्ज्ञायां समानाधिकरण-तत्पुरुषः



{मूलपाठः}

❖ सञ्ज्ञायां दिक्सङ्ख्याप्रकृतीनां समासविधायकं विधिसूत्रम्—

सूत्रम्— दिक्सङ्ख्ये सञ्ज्ञायाम् (२,१.५०)

अर्थः— दिक्सङ्ख्याप्रकृतिकं समर्थसुबन्तं समर्थसुबन्तेन सह समस्यते।

- (विशेषणं विशेष्येण बहुलमित्येव सिद्धे) सञ्ज्ञायामेवेति नियमार्थं सूत्रम्।
- पूर्वेषुकामशमी। सप्तर्षयः।
- तेनेह न - उत्तरा वृक्षाः। पञ्च ब्राह्मणाः॥

पूर्वा चासौ इषुकामशमी
पूर्वा सुँ + इषुकामशमी सुँ
पूर्वा + इषुकामशमी
**पूर्वेषुकामशमी**

सप्त च ते ऋषयः
सप्तन् जस् + ऋषि जस्
सप्तन् + ऋषि
**सप्तर्षयः, सप्तऋषयः**

**नवग्रहाः, पञ्चकोशाः, पञ्चमहायज्ञाः**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तद्धिताद्यर्थे समानाधिकरण-तत्पुरुषः



❖ तद्धिताद्यर्थे दिक्सङ्ख्याप्रकृतीनां समासविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्— तद्धितार्थोत्तरपदसमाहारे च (२,१.५१)**

**अर्थः—** तद्धितार्थे विषये, उत्तरपदे च परतः, समाहारे च वाच्ये दिक्सङ्ख्ये प्राग्वत्।

○ पूर्वस्यां शालायां भवः = पूर्वाशाला इति समासे जाते—

**वार्तिकम्— सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः।**

**अर्थः—** तद्धितवृत्तौ समासवृत्तौ च स्त्रीलिङ्गविशिष्टानां सर्वनामशब्दानां स्त्रीप्रत्ययस्य निवृत्तिर्भवति।

❖ ञप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— दिक्पूर्वपदादसञ्ज्ञायां ञः (४,२.१०७)**

**अर्थः—** अस्माद्भवाद्यर्थे ञः स्यादसञ्ज्ञायाम्॥

❖ आदिवृद्धिविधायकं विधिसूत्रम्—

**सूत्रम्— तद्धितेष्वचामादेः (७,२.११७)**

**अर्थः—** ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात्।

○ 'यस्येति च'— पौर्वशालः।

तद्धितार्थे विषये— **पूर्वस्यां शालायां भवः**

**पूर्वा ङि + शाला ङि**

**पूर्वशाला**

**पूर्वशाला + ञ**

**पौर्वशाला + अ**

**पौर्वशाल् + अ**

**पौर्वशालः**

आद्यचो वृद्धिः
- तद्धिते ञिति प्रत्यये
- तद्धिते णिति प्रत्यये

समानाधिकरणे दिक्सङ्ख्ये
- तद्धितार्थे विषये
- उत्तरपदे च परतः
- समाहारे च वाच्ये

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# उत्तरपदे परतः समानाधिकरण-तत्पुरुषः

लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

❖ 'पञ्च गावो धनं यस्ये'ति त्रिपदे बहुव्रीहौ— {मूलपाठः}

**वार्तिकम्— द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्।**

अर्थः— उत्तरपदे परतः यौ द्वन्द्वतत्पुरुषौ तौ नित्यमेव भवतः, न तु विभाषया।

❖ समासान्त-टच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— गोरतद्धितलुकि (५,४.९२)**

अर्थः— गोऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो, न तु तद्धितलुकि।

○ पञ्चगवधनः॥

* 'पञ्चन् जस् गो जस् धन सु' इत्यलौकिकविग्रहे पूर्वम् 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासः, तदनु 'तद्धितार्थोत्तरपदसमाहारे च' इति तत्पुरुषसमासे प्रातिपदिकत्वात् 'सुपो धातु—' इति सुपो लुकि, अन्तर्वर्तिविभक्तिमाश्रित्य पदत्वान्नलोपे 'पञ्च गो धन' इत्यवस्थायां गोशब्दात् 'गोरतद्धितलुकि' इति टचि, अनुबन्धलोपे, अवादेशे 'पञ्चगवधन' इत्यतः प्रातिपदिकत्वात्सौ विभक्तौ,अनुबन्धलोपे, रुत्वे विसर्गे च 'पञ्चगवधनः' इति सिद्धम्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# समाहारे वाच्ये समानाधिकरण-तत्पुरुषः

लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

{मूलपाठः}

❖ कर्मधारयसंज्ञाविधायकं संज्ञासूत्रम्—

सूत्रम्— तत्पुरुषः समानाधिकरणः कर्मधारयः (१,२.४२)

अर्थः— समानाधिकरणपदकः तत्पुरुषः कर्मधारयसञ्ज्ञको भवति।

❖ द्विगुसंज्ञाविधायकं संज्ञासूत्रम्—

सूत्रम्— संख्यापूर्वो द्विगुः (२,१.५२)

अर्थः— 'तद्धितार्थे'त्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात्॥

❖ एकत्वप्रतिपादकं विधिसूत्रम्—

सूत्रम्— द्विगुरेकवचनम् (२,४.१)

अर्थः— द्विग्वर्थः समाहार एकवत्स्यात्॥

❖ नपुंसकत्वविधायकं विधिसूत्रम्—

सूत्रम्— स नपुंसकम् (२,४.१७)

अर्थः— समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्।

○ पञ्चानां गवां समाहारः = पञ्चगवम्।

समाहारे वाच्ये— पञ्चानां गवां समाहारः

पञ्चन् आम्+ गो आम्

पञ्चन् + गो

पञ्च + गो

पञ्चगो + टच्

पञ्चगो + अ

पञ्चग् अव् + अ

पञ्चगव+ सुँ

पञ्चगव+ अम्

**पञ्चगवम्**

# द्विगोर्भेदाः



**तद्धितार्थद्विगुः**

- षाण्मातुरः, द्वैमातुरः, पञ्चकपालः (पुरोडाशः) इत्यादि

**उत्तरपदद्विगुः**

- पञ्चगवधनः, दशगवधनः, द्व्यह्नप्रियः, पञ्चसखप्रियः इत्यादि

**समाहारद्विगुः**

- पञ्चगवम्, पञ्चपात्रम्, त्रिभुवनम्, चतुर्युगम्, सप्ताहः, नवरात्रम्, त्रिलोकी पञ्चवटी इत्यादि

# विशेषणपूर्वपदकः समानाधिकरण-तत्पुरुषः



{मूलपाठः}

❖ कर्मधारयविधायकं विधिसूत्रम्—

सूत्रम्— विशेषणं विशेष्येण बहुलम् (२,१.५७)

अर्थः— भेदकं= विशेषणं भेद्येन= विशेष्येण समानाधिकरणेन= समानविभक्तिकेन बहुलं प्राग्वत्।



○ नीलमुत्पलं= नीलोत्पलम्।



○ बहुलग्रहणात्क्वचिन्नित्यम् – कृष्णसर्पः।



○ क्वचिन्न - रामो जामदग्न्यः॥

नीलञ्च तदुत्पलम्
नील सुँ+ उत्पल सुँ
नील + उत्पल
नीलोत्पल
नीलोत्पल+ सुँ
नीलोत्पल+ अम्
**नीलोत्पलम्**

१-भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम्।
प्रधानं तु विशेष्यं स्यादप्रधानं विशेषणम्॥

२-क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उपमानपूर्वपदकः समानाधिकरण-तत्पुरुषः (कर्मधारयः)

## लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

**उपमास्थले अंशचतुष्टयम्— चन्द्र इव शोभनं मुखम्।**



उपमानम् (चन्द्रः)



उपमेयम् (मुखम्)

उपमाबोधकः शब्दः (इव)

साधारणधर्मः/ सामान्यवचनम् (सौन्दर्यम्)

घनः



श्यामः

❖ सोपमानकर्मधारयविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— उपमानानि सामान्यवचनैः (२,१.५५)**

**अर्थः—** उपमानवाचकानि सुँबन्तानि समानाधिकरणैः सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च (कर्मधारयः) समासो भवति।

○ घन इव श्यामो= घनश्यामः।

**घनश्यामः— घन इव श्यामः इति लौकिकविग्रहे ‘घन सुँ+ श्याम सुँ’ इत्यलौकिकविग्रहे ‘उपमानानि सामान्यवचनैः’ इति सूत्रेण उपमानवाचकस्य घन सुँ इत्यस्य सामान्यवचनैः श्याम सुँ इति सामान्यवचनेन सुबन्तेन सह समासे समासत्वात् प्रातिपदिकत्वे उपसर्जनसंज्ञकस्य घन सुँ इत्यस्य पूर्वप्रयोगे सुँब्लुकि ‘घनश्याम’ इति जाते ततः विभक्तिकार्ये कृते ‘घनश्यामः’ इति सिद्धम्।**

{मूलपाठः}

❖ मध्यमपदस्य लोपविधायकं वार्तिकम्—

वार्तिकम्— शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम्

अर्थः— शाकपार्थिवादिशब्दानां सिद्धये पूर्वपदस्थितस्य उत्तरपदस्य (मध्यमस्य) लोपः कर्तव्यः।

○ शाकप्रियः पार्थिवः= शाकपार्थिवः। देवपूजको ब्राह्मणो= देवब्राह्मणः॥

शाकः प्रियः यस्य सः
शाक सुँ+ प्रिय सुँ— अनेकमन्यपदार्थे (बहुव्रीहिः)
शाकप्रियः
शाकप्रियश्चासौ पार्थिवश्च
शाकप्रिय सुँ + पार्थिव सुँ (कर्मधारयः)
शाक+पार्थिव
शाकपार्थिव+ सुँ
**शाकपार्थिवः**

देवानां पूजकः
देव आम्+ पूजक सुँ— षष्ठी (तत्पुरुषः)
देवपूजकः
देवपूजकश्चासौ ब्राह्मणश्च
देवपूजक सुँ + ब्राह्मण सुँ (कर्मधारयः)
देव + ब्राह्मण
देवब्राह्मण+ सुँ
**देवब्राह्मणः**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नञ्-तत्पुरुषः

## लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

{मूलपाठः}

❖ नञ्समासविधायकं विधिसूत्रम्—

सूत्रम्— नञ् (२,१.६)

अर्थः— नञ् सुपा सह समस्यते॥

❖ नकारलोपविधायकं विधिसूत्रम्—

सूत्रम्— नलोपो नञः (६,३.७३)

अर्थः— नञो नस्य लोप उत्तरपदे।

- न ब्राह्मणः = अब्राह्मणः॥

❖ नुँट्-आगमविधायकं विधिसूत्रम्—

सूत्रम्— तस्मान्नुँडचि (६,३.७४)

अर्थः— लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुँडागमः स्यात्।

- अनश्वः।
- 'नैकधे'त्यादौ तु न-शब्देन सह 'सुप्सुपे'ति समासः॥

न+ एकधा
नैकधा

### हलादिशब्दोदाहरणम्

न ब्राह्मणः
नञ्+ ब्राह्मण सुँ
न + ब्राह्मण
अ + ब्राह्मण
अब्राह्मणः

- न ज्ञः— अज्ञः
- न साधुः— असाधुः
- न रोगी— अरोगी
- न पण्डितः— अपण्डितः
- न धर्मः— अधर्मः
- न सारः— असारः
- न विवेकः— अविवेकः
- न ज्ञानम्— अज्ञानम्
- न भावः— अभावः
- न शोकः— अशोकः

### अजादिशब्दोदाहरणम्

न अश्वः
नञ्+ अश्व सुँ
न + अश्व
अ + नुँट् अश्व
अ + न् अश्व
अनश्वः

- न अद्यतनम्— अनद्यतनम्
- न आत्मा— अनात्मा
- न आर्यः— अनार्यः
- न ईश्वरः— अनीश्वरः
- न उत्साहः— अनुत्साहः
- न एकः— अनेकः
- न एकधा— अनेकधा
- न ऋणी— अनृणी
- न उक्त्वा— अनुक्त्वा

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# कु-गति-प्रादिसमासः

लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

'नित्यं क्रीडे'त्यतो नित्यमित्यनुवर्तमाने— (चेन्नै संस्करणे अधिकः) {मूलपाठः}

❖ कु-गति-प्रादिसमासविधायकं विधिसूत्रम्—

**सूत्रम्— कु-गति-प्रादयः (२,२.१८)**

**अर्थः— एते समर्थेन नित्यं समस्यन्ते।**

○ कुत्सितः पुरुषः= कुपुरुषः॥

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम्।
तन्नरेण न कर्त्तव्यं नापितेनात्र यत् कृतम्॥
(पञ्चतन्त्रम्, अपरीक्षितकारकम् -२)

❖ गतिसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— ऊर्यादिच्विँडाचश्च (१,४.६१)**

**अर्थः— ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः।**

○ ऊर्यादयः— ऊरीकृत्य।

○ च्विँ-अन्ताः— शुक्लीकृत्य।

○ डाच्-अन्ताः— पटपटाकृत्य।

○ सुपुरुषः।

शोभनः पुरुषः। सु+ पुरुष सुँ

लौकिकविग्रहः— कुत्सितः पुरुषः

अलौकिकविग्रहः— कु + पुरुष सुँ

कु + पुरुष = कुपुरुषः

अशुक्लः शुक्लः सम्पद्यते तं कृत्वा इति

शुक्ल अम्+ कृत्वा

शुक्ल च्विँ+ कृत्वा (कृभ्वस्तियोगे सम्पद्यकर्तरि च्विँ)

शुक्लीकृत्य (अस्य च्वौ— ईत्वम्)

पटत् एवं शब्दं कृत्वा इति

पटत् पटत् डाच्+ कृ क्त्वा

(अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्)

ऊरी + कृत्वा— 'ऊरीकृत्य' इत्यस्य स्वीकृत्य, मनसि कृत्वा इति चार्थः। ऊरीशुक्लीपटपटाशब्दानाम् 'कृत्वा' इति क्त्वान्तेन योगे 'ऊर्यादि—' इति सूत्रेण गतिसंज्ञायां 'कुगति—' इति सूत्रेण समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति क्त्वाशब्दस्य ल्यबादेशे 'ह्रस्वस्य पिति—' इति तुगागमे स्थानिवद्भावेन क्त्वान्तत्वात् 'क्त्वातोसुन्—' इत्यव्ययत्वे 'अव्ययादाप्सुपः' इति समासाज्जातस्य सुपो लुकि एषां साधुत्वम्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# प्रादिसमासः

## लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

{मूलपाठः}

**१.सौनागवार्तिकम्— प्रादयो गताद्यर्थे प्रथमया।**

अर्थः— गताद्यर्थे विद्यमानाः प्रादयः प्रथमान्तेन समर्थसुबन्तेन सह समस्यन्ते।

- प्रगत आचार्यः= प्राचार्यः।

**२.सौनागवार्तिकम्— अत्यादयः क्रान्ताद्यर्थे द्वितीयया।**

अर्थः— क्रान्ताद्यर्थे विद्यमानाः अत्यादयः द्वितीयान्तेन समर्थसुबन्तेन सह समस्यन्ते।

- अतिक्रान्तो मालामिति विग्रहे –

अति+ माला अम्

- उपसर्जनसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— एकविभक्ति चापूर्वनिपाते (१,२.४४)**

अर्थः— विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यात्, न तु तस्य पूर्वनिपातः॥

**सर्वत्र वार्तिकेषु आदिशब्दः प्रकारपरः न तु प्रभृतिपरः।**

१.अतिक्रान्तो मालाम्। २.अतिक्रान्तं मालाम्। ३.अतिक्रान्तेन मालाम्। ४.अतिक्रान्ताय मालाम्। ५.अतिक्रान्ताद् मालाम्। ६.अतिक्रान्तस्य मालाम्। ७.अतिक्रान्ते मालाम्। इत्यादीनामलौकिकविग्रहे मालाशब्दो सर्वत्र द्वितीयान्त एव तस्य नियतविभक्तत्वात्।

लौकिकविग्रहः— प्रगत आचार्यः

अलौकिकविग्रहः— प्र+ आचार्य सुँ

प्राचार्यः (स्वशास्त्रे पारगामी आचार्यः)

(१) प्रगतः पितामहः—प्रपितामहः (परदादा)।
(२) प्रगतो मातामहः—प्रमातामहः (परनाना)।
(३) विप्रकृष्टो देशः—विदेशः (परदेश)।
(४) विरुद्धः पक्षः— विपक्षः (विपरीत पक्ष)।
(५) उपश्लिष्टः पतिः—उपपतिः (जार)।
(६) प्रकृष्टो वीरः—प्रवीरः (श्रेष्ठ वीर)।
(७) विरुद्धा माता—विमाता (सौतेली मां)।
(८) उपोच्चारितं पदम्—उपपदम् (समीप पढ़ा पद)।
(९) अध्यारूढो दन्तः—अधिदन्तः (दान्त पर दान्त)।
(१०) प्रकृष्टो यत्नः—प्रयत्नः (विशेष यत्न)।
(११) प्रततो हस्तः—प्रहस्तः (फैला हुआ हाथ)।
(१२) अपसारितो हस्तः—अपहस्तः (फैला हुआ हाथ)।
(१३) प्रतिकृतं प्रियम्—प्रतिप्रियम् (बदले में किया उपकार)।
(१४) प्रतिगतो जनः—प्रतिजनः (विरोधी पुरुष)।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# प्रादिसमासः

## लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

{मूलपाठः}

❖ उपसर्जनस्य ह्रस्वविधायकं विधिसूत्रम्—

**सूत्रम्— गोस्त्रियोरुपसर्जनस्य (१,२.४८)**

**अर्थः—** उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्।

- अतिमालः।

**३.सौनागवार्तिकम्— अवादयः क्रुष्टाद्यर्थे तृतीयया।**

**अर्थः—**क्रुष्टाद्यर्थे विद्यमानाः अवादयः तृतीयान्तेन समर्थसुबन्तेन सह समस्यन्ते।

- अवक्रुष्टः कोकिलया = अवकोकिलः।

**४.सौनागवार्तिकम्— पर्यादयो ग्लानाद्यर्थे चतुर्थ्या।**

**अर्थः—** ग्लानाद्यर्थे विद्यमानाः पर्यादयो चतुर्थ्यन्तेन समर्थसुबन्तेन सह समस्यन्ते।

- परिग्लानोऽध्ययनाय= पर्यध्ययनः।

**५.सौनागवार्तिकम्— निरादयः क्रान्ताद्यर्थे पञ्चम्या।**

**अर्थः—** क्रान्ताद्यर्थे विद्यमानाः निरादयः पञ्चम्यन्तेन समर्थसुबन्तेन सह समस्यन्ते।

- निष्क्रान्तः कौशाम्ब्याः = निष्कौशाम्बिः॥

उपसर्जन-गोशब्दान्त-प्रातिपदिकस्य

उपसर्जन-स्त्रीप्रत्ययान्त-प्रातिपदिकस्य

ह्रस्वः

अति+ माला अम्
अति+ माल
**अतिमालः**

अव+ कोकिला टा
अव+ कोकिल
**अवकोकिलः**

परि+ अध्ययन ङे
परि+ अध्ययन
**पर्यध्ययनः**

निर्+ कौशाम्बी ङँसि
निर्+ कौशाम्बि
निः+ कौशाम्बि
निष्+ कौशाम्बि
(इदुदुपधस्य चाप्रत्ययस्य)
**निष्कौशाम्बिः**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उपपद-तत्पुरुषः

लघुसिद्धान्तकौमुद्याम्
(तत्पुरुषसमासः)

{मूलपाठः}

❖ उपपदसञ्ज्ञाधिकारसूत्रम्—

**सूत्रम्— तत्रोपपदं सप्तमीस्थम् (३,१.९२)**

**अर्थः—** सप्तम्यन्ते पदे= 'कर्मणी'त्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि, तद्वाचकं पदमुपपदसञ्ज्ञं स्यात्॥

○ (तस्मिन् सत्येव वक्ष्यमाणाः प्रत्ययाः स्युः।)

❖ उपपदसमासविधायकं विधिसूत्रम्—

**सूत्रम्— उपपदमतिङ् (२,२.१९)**

**अर्थः—** उपपदं सुबन्तं समर्थेन नित्यं समस्यते।

○ अतिङन्तश्चायं समासः—
कुम्भं करोति= कुम्भकारः।

○ अतिङ् किम्? मा भवान् भूत्। 'माङि लुँङि'ति सप्तमीनिर्देशान्माङुपपदम्।

* सप्तम्यन्तं पदम् 'कर्मण्यण्' इत्यादौ 'कर्मणि' इत्यादि पदं तत्र वाच्यत्वेन स्थितः कुम्भादिरूपोऽर्थः, 'कुम्भं करोति' इत्यादौ कुम्भादेः कर्मसंज्ञाविधानात्; तद्वाचकं पदम् 'कुम्भम्' इत्यादि द्वितीयान्तं तस्योपपदसंज्ञा॥

**लौकिकविग्रहः—** कुम्भं करोति
**अलौकिकविग्रहः—** कुम्भ ङस् + कार
कुम्भ + कार
कुम्भ + कार सुँ
**कुम्भकारः**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# गतिकारकोपपदानां विषये ध्यातव्यांशः

लघुसिद्धान्तकौमुद्याम्
(तत्पुरुषसमासः)

**परिभाषा—** गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः।

**अर्थः—** गति-कारक-उपपदसञ्ज्ञकानां कृदन्तैः सह समासः भवति चेत् कृदन्तशब्देभ्यः सुबुत्पत्तेः पूर्वं स्यात्।

- व्याघ्री।
- अश्वक्रीती।
- कच्छपीत्यादि॥

{मूलपाठः}

कृदन्तैः सह सुबुत्पत्तेः पूर्वं समासः

गतिः— (व्याघ्री)

कारकम्— (अश्वक्रीती)

उपपदम्— (कच्छपी)

- व्याङ्पूर्वात् 'घ्रा' गन्धोपादाने इत्यस्माद्धातोः 'आतश्चोपसर्गे' इति कप्रत्यये 'आतो लोपः'-इत्याकारलोपे आङो 'घ्र' शब्देन सुबुत्पत्तेः प्राग् गतिसमासे विशब्दस्य आघ्रशब्देन गतिसमासे 'व्याघ्र' शब्दाद् 'जातेरस्त्रीविषयाद् —' इति ङीषि व्याघ्री ' इति सिध्यति । अत्र यदि घ्रशब्दस्य आघ्रशब्दस्य वा सुबन्तत्वमपेक्ष्येत तर्हि " स्वार्थ-द्रव्य-लिङ्ग-सङ्ख्या-कारक-प्रयुक्तकार्याणां क्रमिकत्वम्" इति नियमात् सङ्ख्याद्यपेक्ष्य ततः प्रागेव लिङ्गयोग इति लिङ्गनिमित्तप्रत्ययेन टापा भाव्यं न तु ङीषा, घ्र-आघ्रशब्दयोर्जातिवाचकत्वाभावात् ततष्टाबन्तेन समासे 'व्याघ्रा'शब्दस्य अदन्तत्वाभावाद् ङीष् नैव स्यादिति भावः ॥
- 'अश्वेन क्रीतेति' 'कर्तृकरणे कृता बहुलम्' इति समासः। सुबन्तेन समासे तु टापा भाव्यमिति अदन्तत्वाभावात् 'क्रीतात् करणपूर्वात्' इत्ययं ङीष् नैव स्यादिति भावः ॥
- 'कच्छेन पिबतीति' इत्यत्र 'सुपि स्थ' इति सूत्रे 'सुपी'ति योगविभागात् कप्रत्ययः अत्रापि सुबुत्पत्तेः पूर्वम् उपपदसमासे कच्छ+प ततो जातिलक्षणो ङीष् कच्छपी । अत्रापि सुबन्ततापेक्षायां टाबेव स्यान्न जातित्वलक्षणो ङीषिति बोध्यम् ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# समासान्त-अच्-प्रत्ययः

लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

{मूलपाठः}

❖ समासान्त-अच्-प्रत्ययविधानार्थं विधिसूत्रम्—

सूत्रम्— तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः (५,४.८६)

अर्थः— सङ्ख्याव्ययादेरङ्गुल्यन्तस्य (तत्पुरुषस्य) समासान्तोऽच् स्यात्।

○ द्वे अङ्गुली प्रमाणमस्य= द्व्यङ्गुलम्। निर्गतमङ्गुल्यो= निरङ्गुलम्॥

❖ समासान्त-अच्-प्रत्ययविधानार्थं विधिसूत्रम्—

सूत्रम्— अहः सर्वैकदेश-सङ्ख्यात-पुण्याच्च रात्रेः (५,४.८७)

अर्थः— एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः।

○ अहर्ग्रहणं द्वन्द्वार्थम्॥

❖ पुँल्लिङ्गविधायकं नियमसूत्रम्—

सूत्रम्— रात्राह्नाहाः पुंसि (२,४.२९)

अर्थः— एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव।

○ अहश्च रात्रिश्चाहोरात्रः। सर्वरात्रः। (पूर्वरात्रः)। सङ्ख्यातरात्रः। (पुण्यरात्रः)

○ सङ्ख्यापूर्वं रात्रं क्लीबम्— द्विरात्रम्। त्रिरात्रम्॥

द्व्योः रात्र्योः समाहारः। तिसृणां रात्रीणां समाहारः

द्वि ओस्+ रात्रि ओस्। त्रि आम्+ रात्रि आम्। (तद्धितार्थोत्त... इति द्विगुः)

द्वे अङ्गुली प्रमाणमस्य

प्रमाणे द्वयसज्दघ्नञ्मात्रचः इत्यस्मात्

पूर्वमेव तद्धितार्थोत्त... इति द्विगुः

द्वि औ + अङ्गुलि औ

द्व्यङ्गुलि + अच्

'यचि भम्' यस्येति च—

'प्रमाणे लो द्विगोर्नित्यम्' इति

वार्तिकात् मात्रचो लुकि—

द्व्यङ्गुल् + अ

द्व्यङ्गुलम् (दारु)

निर्गतमङ्गुल्यो

निरादयः क्रान्ताद्यर्थे...

निर्+ अङ्गुलि भ्यस्

निर् + अङ्गुलि

निरङ्गुलि + अच्

निरङ्गुल् + अ

निरङ्गुलम् (अङ्गुलीयकम्)

अहश्च रात्रिश्चानयोः समाहारः

अहन् सुँ+ रात्रि सुँ (चार्थे द्वन्द्वः)

अहन् + रात्र्+अच्

रूपरात्रि-रथन्तरेषु रुँत्वं वाच्यम्—

अहर् + रात्र्+अ

अहोरात्रः

पूर्वं रात्रेः

पूर्वपराधरोत्तरमेकदेशिनैकाधिकरणे

पूर्व सुँ+ रात्रि ङस्

पूर्वरात्रः

सङ्ख्याता चासौ रात्रिश्च

पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन

सङ्ख्याता सुँ+ रात्रि सुँ

सङ्ख्यातरात्रः (पुंवद्भावः)

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# समासान्त-टच्-प्रत्ययः, आत्वविधानम्

लघुसिद्धान्तकौमुद्याम् (तत्पुरुषसमासः)

{मूलपाठः}

❖ समासान्त-टच्-प्रत्ययविधानार्थं विधिसूत्रम्—

**सूत्रम्—** राजाहःसखिभ्यष्टच् (५,४.९१)

**अर्थः—** एतदन्तात्= राजन्-अहन्-सखि-अन्तात् तत्पुरुषाट्टच् स्यात् ।परमराजः॥

❖ आत्वविधायकं विधिसूत्रम्—

**सूत्रम्—** आन्महतः समानाधिकरणजातीययोः (६,३.४६)

**अर्थः—** महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे।

- महाराजः।
- ‘प्रकारवचने जातीयर्’— महाप्रकारो महाजातीयः॥

❖ आत्वविधायकं विधिसूत्रम्—

**सूत्रम्—** द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः (६,३.४७)

**अर्थः—** द्विशब्दस्य अष्टन्-शब्दस्य च उत्तरपदपरे आत्स्यात् न तु बहुव्रीह्यशीत्योः।

- द्वौ च दश च= द्वादश। (अष्टौ च दश च= अष्टादश) अष्टाविंशतिः॥

❖ त्रयस्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्—** त्रेस्त्रयः (६,३.४८)

**अर्थः—** त्रिशब्दस्य त्रयस्-आदेशः स्यात् सङ्ख्यायामुत्तरपदे न तु बहुव्रीह्यशीत्योः।

- त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्॥

परमश्चासौ राजा
परम सुँ+ राजन् सुँ
सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः
परमराजन् + टच्
परमराजन् + अ
परमराज् + अ
नस्तद्धिते— टिलोपः
**परमराजः**

महांश्चासौ राजा
महत् सुँ+ राजन् सुँ
मह आ+ राजन्
महाराजन् + टच्
महाराजन् + अ
महाराज् + अ
**महाराजः**

द्वौ च दश च
द्वि औ+ दशन् जस्
द्वा दशन्
द्वादशन् + जस्
**द्वादश**

अष्टौ च दश च
अष्टन् जस्+ दशन् जस्
अष्टा दशन्
अष्टादशन् + जस्
**अष्टादश**

त्रयश्च दश च
त्रि जस्+ दशन् जस्
त्रयस् दशन्

त्रयोदशन् + जस्
**त्रयोदश**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लिङ्गविधानम्



{मूलपाठः}

❖ द्वन्द्वे तत्पुरुषे च परपदानुसारं लिङ्गविधायकं विधिसूत्रम्—

**सूत्रम्— परवल्लिङ्गं द्वन्द्व-तत्पुरुषयोः (२,४.२६)**

**अर्थः—** एतयोः= इतरेतरयोगद्वन्द्व-तत्पुरुषयोः परपदस्येव लिङ्गं स्यात्।

- कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ।

**वार्तिकम्—** द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः।

- पञ्चसु कपालेषु संस्कृतः= पञ्चकपालः पुरोडाशः॥

❖ द्वितीयासमासविधायकं विधिसूत्रम्—

**सूत्रम्— प्राप्तापन्ने च द्वितीयया (२,२.४)**

**अर्थः—** समस्येते। अकारश्चानयोरन्तादेशः।

- प्राप्तो जीविकां= प्राप्तजीविकः। आपन्नजीविकः।
- अलं कुमार्यै – अलंकुमारिः। अत एव ज्ञापकात्समासः।
- निष्कौशाम्बिः॥

निर्+ कौशाम्बी ङसिँ
**निष्कौशाम्बिः**

कुक्कुटश्च मयूरी च
कुक्कुट सुँ+ मयूरी सुँ
**कुक्कुटमयूर्यौ इमे मयूरीकुक्कुटौ इमौ**

पञ्चसु कपालेषु संस्कृतः
पञ्चन् सुप्+ कपाल सुप् — तद्धितार्थोत्तर..
पञ्चकपाल सुप् + अण् — द्विगोर्लुगनपत्ये
**पञ्चकपालः (पुरोडाशः)**

प्राप्त सुँ+ जीविका अम्
प्राप्तजीविका — गोस्त्रियोरुपसर्जनस्य
**प्राप्तजीविकः (पुरुषः)**

अलम्+ कुमारी ङे
अलंकुमारी — गोस्त्रियोरुपसर्जनस्य
**अलङ्कुमारिः**

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# लिङ्गविधानम्

लघुसिद्धान्तकौमुद्याम्
(तत्पुरुषसमासः)

{मूलपाठः}

❖ पुन्नपुंसकलिङ्गविधायकं विधिसूत्रम्—

**सूत्रम्— अर्धर्चाः पुंसि च (२,४.३१)**

अर्थः— अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः।

- अर्धर्चः। अर्धर्चम्।
- एवं ध्वज-तीर्थ-शरीर-मण्डप-यूप-देहाङ्कुश-पात्र-सूत्रादयः।

**वार्तिकम्— सामान्ये नपुंसकम्।**

अर्थः— लिङ्गविशेषाविवक्षायां नपुंसकलिङ्गमेव प्रयोक्तव्यम्।

- मृदु पचति। प्रातः कमनीयम्॥

**॥ इति तत्पुरुषः॥**

ऋचोऽर्धम्
ऋच् ङस्+ अर्ध सु
अर्ध+ ऋच्
अर्धर्च्+अच्
**अर्धर्चः। अर्धर्चम्।**

अर्ध नपुंसकम्

ऋक्पूरब्धूःपथामानक्षे

✓ क्रियाविशेषणानां क्लीबत्वं कर्मत्वञ्चेष्यते

# तत्पुरुषसमासस्य परीक्षणम्

**०१. कर्मधारयस्य भेदोऽस्ति—**

क. तत्पुरुषः

**ख.द्विगुः**

ग. बहुव्रीहिः

घ. सुप्सुपा

**०२. ग्रामगतः इत्यत्र कः समासः ?**

क. पञ्चमीतत्पुरुषः

ख. तृतीयातत्पुरुषः

**ग. द्वितीयातत्पुरुषः**

घ. सप्तमीतत्पुरुषः

**०३. 'नखनिर्भिन्नः' इत्यत्र केन समासः—**

क. तृतीया तत्कृतार्थेन गुणवचनेन

**ख.कर्तृकरणे कृता बहुलम्**

ग. चतुर्थी तदर्थार्थ-बलि-हित-सुख-रक्षितैः

घ. स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन

**०४. एतेषु केन सूत्रेण अर्थशब्देन सह नित्यसमासविधानं क्रियते—**

क. तृतीया तत्कृतार्थेन गुणवचनेन

**ख.चतुर्थी तदर्थार्थ-बलि-हित-सुख-रक्षितैः**

ग. अर्थ नपुंसकम्

घ. तद्धितार्थोत्तरपदसमाहारे च

**०५. 'गोरक्षितम्' इत्यत्र कः समासः ?**

**क. चतुर्थीतत्पुरुषः**

ख. तृतीयातत्पुरुषः

ग. द्वितीयातत्पुरुषः

घ. सप्तमीतत्पुरुषः

**०६. 'यूपदारु' इत्यत्र का प्रकृतिः का च विकृतिः?**

क. यूपप्रकृतिः दारुविकृतिः।

ख. दारुविकृतिःयूपप्रकृतिः ।

**ग. दारुप्रकृतिः यूपविकृतिः।**

घ. यूपदारुप्रकृतिः दारुयूपविकृतिः।

**०७. 'अर्धपिप्पली' इत्यत्र कः समासः ?**

क. पञ्चमी

ख. सप्तमी

ग. कर्मधारय

**घ. एकदेशी**

**०८. 'स्तोकान्मुक्तः' इत्यत्र पञ्चम्याः अलुक् केन —**

क. पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे

ख. अर्धं नपुंसकम्

ग. स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन

**घ. पञ्चम्याः स्तोकादिभ्यः**

**०९. शौण्डादिगणे अस्य शब्दस्य पाठः नास्ति —**

क. धूर्त

ख. पण्डित

**ग. क्रीत**

घ. निपुण

**१०. 'योगविभागः' इत्यस्य व्याकरणसन्दर्भे अयमर्थो भवति —**

**क. सूत्रविभागः**

ख. प्राणायामविभागः

ग. वार्तिकविभागः

घ. परिभाषाविभागः

**११. 'पञ्च ब्राह्मणाः' इत्यत्र समासाभावस्य प्रमुखं कारणं किम् ?**

क. सामर्थ्याभावः

ख. दिक्शब्दाभावः

**ग. सञ्ज्ञाभावः**

घ. उत्तरपदाभावः

**१२. 'पौर्वशालः' इति कस्योदाहरणम् ?**

**क. तद्धितार्थविषयस्य**

ख. उत्तरपदपरस्य

ग. समाहारस्य

घ. सञ्ज्ञायाः

**१३. 'गोरतद्धितलुकि' इतिसूत्रेण किं भवति—**

क. गवादेशः

ख. तद्धितस्य लुक्

**ग. टच्-प्रत्ययः**

घ. गोः लुक्

**१४. द्विगुसमासविषये इदं कथनम् अयुक्तम्—**

क. द्विग्वर्थः समाहारः एकवद्भवति।

ख. समाहारे द्विगुः नपुंसकं भवति।

ग. 'तद्धितार्थे'त्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः भवति ।

**घ. संख्यापूर्वो द्विगुसंज्ञो भवति ।**

**१५. भेदकम् इत्यास्यार्थोऽस्ति—**

**क. विशेषणम्**

ख. विशेष्यम्

ग. विशेषम्

घ. विशेष्यकम्

**१६. एषु उपमानपूर्वपदकः समासः कः—**

क. नीलोत्पलम्

**ख. घनश्यामः**

ग. पुरुषव्याघ्रः

घ. शाकपार्थिवः

**१७. 'रामो जामदग्न्यः' इत्यत्र समासाभावस्य किं कारणम् ?**

क. विकल्पः

ख. विशेषणम्

**ग. बहुलम्**

घ. समासनित्यता

**१८. 'देवब्राह्मणः' इत्यत्र कः समासः?**

**क. मध्यमपदलोपी**

ख. उपमानतत्पुरुषः

ग. विशेषणतत्पुरुषः

घ. षष्ठीतत्पुरुषः

**१९. अब्राह्मणः इत्यत्र नञः नकारलोपः केन सूत्रेण ?**

क. नञ्

ख. नलोपो नञः

ग. तस्मान्नुँडचि

घ. तस्य लोपः

**२०. 'नैकधा' इत्यत्र कः समासः?**

क. नञ्

ख. बहुव्रीहिः

ग. अव्ययीभावः

**घ. सुप्सुपासमासः (केवलसमासः)**

**२१. 'न ऋणी' इति विग्रहे किं रूपम् ?**

क. नृणी

**ख. अनृणी**

ग. उनृणी

घ. ऋनृणी

**२२. एषु गतिसमासस्य किमुदाहरणम् ?**

क. कुपुरुषः

ख. सुपुरुषः

**ग. शुक्लीकृत्य**

घ. प्राचार्यः

**२३. 'प्रादयो गताद्यर्थे प्रथमया' इति कस्य वचनम् ?**

क. कात्यायनस्य

**ख.सौनागस्य**

ग. पतञ्जलेः

घ. भारद्वाजस्य

**२४. 'एकविभक्ति चापूर्वनिपाते' इति सूत्रेण भवति—**

**क.उपसर्जनसञ्ज्ञा**

ख. पूर्वनिपातः

ग. विभक्तिसञ्ज्ञा

घ. प्रादिसमासः

**२५. उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य............. स्यात्।**

क. उपसर्जनम्

ख. समासः

ग. पुंवद्भावः

**घ. ह्रस्वः**

**२६. समुचितं मेलनं कुरुत—**

| | |
|---|---|
| क. अवादयः क्रुष्टाद्यर्थे | क. द्वितीयया |
| ख. पर्यादयो ग्लानाद्यर्थे | ख. तृतीयया |
| ग. निरादयः क्रान्ताद्यर्थे | ग. चतुर्थ्या |
| घ. अत्यादयः क्रान्ताद्यर्थे | घ. पञ्चम्या |

**क. ख, ग,घ, क**

ख. क , ग, घ ख

ग. घ, ख, ग, क

घ. ख, ग, क घ

**२७. 'उपपदम्' इत्यत्र कः समासः ?**

क. उपपदसमासः

**ख.प्रादिसमासः**

ग. गतिसमासः

घ. कर्मधारयः

**२८. 'कुम्भं करोति' इत्यत्र उपपदसञ्ज्ञा कस्य भवति ?**

क. कुम्भं करोति

**ख.कुम्भम्**

ग. करोति

घ. कृ

**२९. सुबुत्पत्तेः प्राग् अयं समासो न भवति ?**

क. गतिसञ्ज्ञकानां कृद्भिः सह

ख. कारकानां कृद्भिः सह

**ग. प्रादीनां कृद्भिः सह**

घ. उपपदानां कृद्भिः सह

**३०. 'कच्छपी' इत्यत्र कः समासः ?**

**क. उपपदसमासः**

ख. प्रादिसमासः

ग. गतिसमासः

घ. कर्मधारयः

**३१. 'तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः' इति सूत्रेण किं भवति—**

क. अव्ययीभावसमासः

ख. तत्पुरुषसमासः

**ग. समासान्त-अच्-प्रत्ययः**

घ. समासान्त-टच्-प्रत्ययः

**३२. 'अहोरात्रः' इत्यत्र कः समासः—**

क. अव्ययीभावः

ख. तत्पुरुषः

ग. बहुव्रीहिः

**घ. द्वन्द्वः**

**३३. एतेषु अशुद्धं चिनुत—**

**क. सर्वरात्रिः**

ख. पुण्यरात्रः

ग. त्रिरात्रम्

घ. सङ्ख्यातरात्रः

**३४. 'परमराजः' इत्यत्र कः समासान्तः ?**

**क. टच्**

ख. अच्

ग. अ

घ. आत्

**३५. 'महाराजः' इत्यत्र केन सूत्रेण समासः ?**

क. राजाहःसखिभ्यष्टच्

ख. आन्महतः समानाधिकरणजातीययोः

ग. द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः

**घ. सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः**

**३६. एतेषु अशुद्धं चिनुत—**

क. द्विचत्वारिंशत्, द्वाचत्वारिंशत्

ख. द्विषष्टिः, द्वाषष्टि

**ग. द्विविंशतिः, द्वाविंशतिः**

घ. त्रयश्चत्वारिंशत्, त्रिचत्वारिंशत्

**३७. परवल्लिङ्गं.............।**

क. द्वन्द्वयोः

ख. तत्पुरुषबहुव्रीहौ

**ग. द्वन्द्वतत्पुरुषयोः**

घ. द्वन्द्वैकशेषयोः

**३८. 'आपन्नजीविकः' इत्यत्र कः समासः?**

क. बहुव्रीहिः

ख. उपपदसमासः

**ग. द्वितीयासमासः**

घ. प्रादिसमासः

**३९. 'निष्कौशाम्बिः' इत्यत्र ह्रस्वः केन सूत्रेण—**

**क. गोस्त्रियोरुपसर्जनस्य**

ख. अम्बार्थनद्योर्ह्रस्वः

ग. प्राप्तापन्ने च द्वितीयया

घ. उपसर्जनं पूर्वम्

**४०. 'अर्धर्चाः पुंसि च' इत्यस्योदाहरणे अशुद्धं चिनुत—**

क. शरीरः, शरीरम्

ख. अर्धर्चः, अर्धर्चम्

ग. सूत्रः, सूत्रम्

**घ. वृक्षः, वृक्षम्**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# बहुव्रीहेः भेदाः

लघुसिद्धान्तकौमुद्याम्
(बहुव्रीहिसमासः)

| नामानि | उदाहरणानि | समासविधायकसूत्राणि/ वार्तिकानि |
| --- | --- | --- |
| १- सामान्यः/समानाधिकरणः → | प्राप्तानन्दः , पीताम्बरः इत्यादि। | (अनेकमन्यपदार्थे) |
| २- व्यधिकरणः → | चक्रपाणिः , कण्ठेकालः इत्यादि। | (ज्ञापकात्समासः) |
| ३- सङ्ख्योत्तरपदः → | उपदशाः , उपविंशाः इत्यादि। | (सङ्ख्याव्ययासन्नदूराधिकसङ्ख्या सङ्ख्येये) |
| ४- सङ्ख्योभयपदः → | द्वित्राः , त्रिचतुराः इत्यादि। | (सङ्ख्याव्ययासन्नदूराधिकसङ्ख्या सङ्ख्येये) |
| ५- सहपूर्वपदः → | सपुत्रः/ सहपुत्रः , सकर्मकः इत्यादि। | (तेन सहेति तुल्य योगे) |
| ६- नञ्बहुव्रीहिः → | अपुत्रः, अनपत्यः इत्यादि। | (नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः) |
| ७- प्रादिबहुव्रीहिः → | निर्विघ्नम्, सुगन्धिः इत्यादि। | (प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः) |
| ८- उपमानपूर्वपदः → | गजाननः , उष्ट्रमुख इत्यादि। | (सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च) |
| ९- व्यतिहारलक्षणः → | केशाकेशि, दण्डादण्डि इत्यादि | (तत्र तेनेदमिति सरूपे) |
| १०- दिगन्तराललक्षणः → | दक्षिणपूर्वा, पूर्वोत्तरा इत्यादि | (दिङ्नामान्यन्तराले) |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

लघुसिद्धान्तकौमुद्याम्
(बहुव्रीहिसमासः)

# बहुव्रीहिः

१. द्विपदः— प्राप्तोदकः

२. बहुपदः — परमस्थूलदृष्टिः

३. सङ्ख्योत्तरपदः— उपदशाः।

४. सङ्ख्योभयपदः— द्वित्राः।

५. सहपूर्वपदः— सपुत्रः।

६. व्यतिहारलक्षणः— केशाकेशि।

७. दिगन्तराललक्षणः— उत्तरपश्चिमा।

सप्तभिराख्याभिर्वा विख्यातो यः स वै बहुव्रीहिः। अन्यपदार्थो मुख्यः कथितो विबुधैर्बहुव्रीहौ ॥
द्वाभ्यां पदाभ्यां बहुभिः पदैर्या सङ्ख्योभयोः सा पदयोः पदाग्रे। यस्याभवत् पूर्वपदे सहश्च दिगन्तरालव्यतिहारलक्ष्मः॥

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# व्यधिकरणबहुव्रीहिः

लघुसिद्धान्तकौमुद्याम् (बहुव्रीहिसमासः)

{मूलपाठः}

❖ बहुव्रीहिसमासाधिकारसूत्रम्—

**सूत्रम्— शेषो बहुव्रीहिः॥ (२,२.२३)**

अर्थः— अधिकारोऽयं प्राग्द्वन्द्वात्॥

❖ बहुव्रीहिसमासविधायकं विधिसूत्रम्—

**सूत्रम्— अनेकमन्यपदार्थे (२,२.२४)**

अर्थः— अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः॥

❖ पूर्वप्रयोगविधायकं विधिसूत्रम्—

**सूत्रम्— सप्तमीविशेषणे बहुव्रीहौ (२,२.३५)**

अर्थः— सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात्।

○ अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः॥

❖ अलुग्विधायकं विधिसूत्रम्—

**सूत्रम्— हलन्तात्सप्तम्याः संज्ञायाम् (६,३.९)**

अर्थः— हलन्तादन्ताच्च सप्तम्या अलुक्।

○ कण्ठेकालः। (त्वचिसारः)

कण्ठे कालो यस्य सः

कण्ठ ङि+ काल सुँ

कण्ठेकाल+ सुँ

**कण्ठेकालः (शिवः)**

त्वचि सारो यस्य सः

त्वच् ङि+ सार सुँ

त्वचिसार+ सुँ

**त्वचिसारः (वंशः)बाँस**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# द्वितीयातः सप्तमीपर्यन्तं समानाधिकरणबहुव्रीहिः

## लघुसिद्धान्तकौमुद्याम् (बहुव्रीहिसमासः)

{मूलपाठः}

- द्वितीयाबहुव्रीहिः— प्राप्तमुदकं यं स प्राप्तोदको= ग्रामः।
- तृतीयाबहुव्रीहिः— ऊढो रथो येन सः- ऊढरथो=ऽनड्वान्।
- चतुर्थीबहुव्रीहिः— उपहृतः पशुर्यस्मै सः- उपहृतपशू= रुद्रः।
- पञ्चमीबहुव्रीहिः— उद्धृतमोदनं यस्याः सा- उद्धृतौदना= स्थाली।
- षष्ठीबहुव्रीहिः— पीतम् अम्बरं यस्य सः - पीताम्बरो= हरिः।
- सप्तमीबहुव्रीहिः— वीराः पुरुषाः सन्ति यस्मिन् स- वीरपुरुषको= ग्रामः।

| |
|---|
| प्राप्त सुँ+ उदक सुँ |
| ऊढ सुँ+ रथ सुँ |
| उपहृत सुँ+ पशु सुँ |
| उद्धृत सुँ+ ओदन सुँ |
| पीत सुँ+ अम्बर सुँ |
| वीर जस्+ पुरुष जस् |

शेषाद्रिभाषा

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# प्रादिबहुव्रीहिः। नञ्बहुव्रीहिः।

लघुसिद्धान्तकौमुद्याम्
(बहुव्रीहिसमासः)

**वार्तिकम्—** प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः।

**अर्थः—** प्रादिभ्यः परं यद्धातुजं= कृदन्तं तदन्तस्य पदान्तरेण सह बहुव्रीहिः, पूर्वान्तर्गतस्योत्तरपदस्य धातुजस्य लोपश्च वा स्यात्।

- प्रपतितपर्णः, प्रपर्णः।

**वार्तिकम्—** नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः

**अर्थः—** नञः परं यद् अस्त्यर्थवाचि= विद्यमानवाचि पदं तदन्तस्य पदान्तरेण बहुव्रीहिः, अस्त्यर्थवाचिनां तु वा लोपः स्यात्।

- अविद्यमानपुत्रः, अपुत्रः॥

{मूलपाठः}

प्रकर्षेण पतितानि= प्रपतितानि प्रादितत्पुरुषः
प्रपतितानि पर्णानि यस्य सः
प्रपतित जस्+ पर्ण जस्
प्र + पर्ण
प्रपर्णः, प्रपतितपर्णः

न विद्यमानः= अविद्यमानः नञ्तत्पुरुषः
अविद्यमानः पुत्रो यस्य सः
अविद्यमान सुँ + पुत्र सुँ
अ + पुत्र
अपुत्रः, अविद्यमानपुत्रः।

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# समानाधिकरणबहुव्रीहौ पुंवद्भावः

लघुसिद्धान्तकौमुद्याम् (बहुव्रीहिसमासः)

{मूलपाठः}

❖ पुंवद्भावविधायकं विधिसूत्रम्—

**सूत्रम्— स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु (६,३.३४)**

- उक्तपुंस्कादनूङ्= ऊङोऽभावोऽस्यामिति बहुव्रीहिः।
- निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक्।[१] (भाषितपुंस्कानूङः)

अर्थः— तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर[१] ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे, न तु पूरण्यां प्रियादौ च परतः।

- 'गोस्त्रियोरि'ति ह्रस्वः— चित्रगुः। रूपवद्भार्यः।
- अनूङ् किम् ? वामोरुभार्यः॥

✓ भाषितः पुमान् यस्मिन् अर्थे स भाषितपुंस्कः। सोऽस्त्यस्य तद्भाषितपुंस्कम् 'अर्शाद्यजन्तोऽयम्।

✓ यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते।
क्लीबवृत्तौ तदेव स्याद् उक्तपुंस्कं तदुच्यते॥

१.चेन्नै संस्करणे नास्त्ययं पाठः।

चित्रा गावो यस्य सः (ब्राह्मणः)
चित्रा जस् + गो जस्
चित्रा + गो
चित्र+गो
चित्र+गु
चित्रगु + सुँ
**चित्रगुः (ब्राह्मणः)**

रूपवती भार्या यस्य सः (पुरुषः)
रूपवती सुँ+ भार्या सुँ
रूपवती + भार्या
रूपवत् + भार्या
रूपवद् + भार्या
रूपवद् + भार्य
रूपवद्भार्य + सुँ
**रूपवद्भार्यः (पुरुषः)**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# बहुव्रीहौ पूरणीप्रमाण्योः समासान्त-अप्-प्रत्ययः



{मूलपाठः}

- पूरण्यां तु –

❖ समासान्त-अप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** अप्पूरणीप्रमाण्योः (५,४.११६)

**अर्थः—** पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात् प्रमाण्यन्ताच्च बहुव्रीहेर्-अप् स्यात्।

- कल्याणी पञ्चमी यासां रात्रीणां ताः= कल्याणीपञ्चमा रात्रयः।
- स्त्री प्रमाणी यस्य स= स्त्रीप्रमाणः।
- अप्रियादिषु किम् ? कल्याणीप्रिय इत्यादि॥

पूरणीप्रत्ययान्तस्य प्रत्युदाहरणम्

कल्याणी पञ्चमी यासां (रात्रीणां) ताः (रात्रयः)
कल्याणी सुँ + पञ्चमी सुँ (अनेकमन्यपदार्थे)
कल्याणी + पञ्चमी
कल्याणीपञ्चमी + अप्
कल्याणीपञ्चम् + अ (यस्येति च)
कल्याणीपञ्चम + टाप् (अजाद्यतष्टाप्)
कल्याणीपञ्चमा + जस्
**कल्याणीपञ्चमाः (रात्रयः)**

प्रमाण्यन्तात् अप्-प्रत्ययः

स्त्री प्रमाणी यस्य सः (पुरुषः)
स्त्री सुँ+ प्रमाणी सुँ (अनेकमन्यपदार्थे)
स्त्रीप्रमाणी+ अप्
स्त्रीप्रमाण्+ अ
स्त्रीप्रमाण + सुँ
**स्त्रीप्रमाणः (पुरुषः)**

स्त्रीशब्दस्य भाषित-पुंस्काभावान्न पुंवद्

प्रियादेः प्रत्युदाहरणम्

कल्याणी प्रिया यस्य सः (पुरुषः)
कल्याणी सुँ+ प्रिया सुँ (अनेकमन्यपदार्थे)
कल्याणीप्रिय+ सुँ= **कल्याणीप्रियः (पुरुषः)**

**प्रियादिगणः—** प्रिया-कान्ता-मनोज्ञा-स्वा-कल्याणी-भक्ति-दुर्भगा। सचिवा-वामना-क्षान्ता-चपला-निचिता-समा। सुभगा-दुहिता-बाल्या वामाऽथ तनया तथा।।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# बहुव्रीहौ ष-षच्-समासान्तप्रत्ययौ



{मूलपाठः}

❖ समासान्त-षच्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् (५,४.११३)

अर्थः— स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद् बहुव्रीहेः षच् स्यात्।

- दीर्घसक्थः। जलजाक्षी।
- स्वाङ्गात्किम् ? दीर्घसक्थि= शकटम्। स्थूलाक्षा= वेणुयष्टिः। अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच्॥

❖ समासान्त-ष-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— द्वित्रिभ्यां ष मूर्ध्नः (५,४.११५)

अर्थः— आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ।

- द्विमूर्धः। त्रिमूर्धः॥

दीर्घं सक्थि यस्य तत्
स्थूलानि अक्षीणि यस्या सा

दीर्घे सक्थिनी यस्य सः (पुरुषः)
दीर्घ औ + सक्थि औ (अनेकमन्यपदार्थे)
दीर्घसक्थि+ षच्
दीर्घसक्थ्+ अ
**दीर्घसक्थः (पुरुषः)**

जलजे इव अक्षिणी यस्या सा (स्त्री)
जलज औ + अक्षि औ (अनेकमन्यपदार्थे)
जलजाक्षि+ षच्
जलजाक्ष् + अ
जलजाक्ष + ङीष् (षिद्गौरादिभ्यश्च)
**जलजाक्षी (स्त्री)**

सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः।
ऊरू रघूत्तमः पातु रक्षःकुलविनाशकृत्॥
जानुनी सेतुकृत् पातु जङ्घे दशमुखान्तकः।
पादौ विभीषणः श्रीदः पातु रामोऽखिलं वपुः॥

द्वौ मूर्धानौ यस्य सः
द्वि औ + मूर्धन् औ (अनेकमन्यपदार्थे)
द्विमूर्धन्+ ष
(नस्तद्धिते) द्विमूर्ध्+ अ= **द्विमूर्धः**

त्रयो मूर्धानो यस्य सः
त्रि जस् + मूर्धन् जस् (अनेकमन्यपदार्थे)
त्रिमूर्धन्+ ष
(नस्तद्धिते) त्रिमूर्ध्+ अ= **त्रिमूर्धः**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# बहुव्रीहौ समासान्तप्रत्ययः



{मूलपाठः}

❖ समासान्त-अप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अन्तर्बहिर्भ्यां च लोम्नः (५,४.११७)**

अर्थः— आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ।

○ अन्तर्लोमः। बहिर्लोमः॥

❖ समासान्त-लोप-विधायकं विधिसूत्रम्—

**सूत्रम्— पादस्य लोपोऽहस्त्यादिभ्यः (५,४.१३८)**

अर्थः— हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ।

○ व्याघ्रस्येव पादावस्य व्याघ्रपात्।

हस्तिपादौ इव पादौ यस्य सः

○ अहस्त्यादिभ्यः किम्? हस्तिपादः। कुसूलपादः॥

❖ समासान्त-लोप-विधायकं विधिसूत्रम्—

कुसूलपादौ इव पादौ यस्य सः

**सूत्रम्— सङ्ख्या-सु-पूर्वस्य (५,४.१४०)**

अर्थः— (सङ्ख्या-सु-पूर्वस्य)पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ।

○ द्विपात्। सुपात्॥

अन्तर्लोमानि यस्य सः
अन्तर्+ लोमन् जस् (अनेकमन्यपदार्थे)
अन्तर्लोमन्+ अप्
अन्तर्लोम्+ अ (नस्तद्धिते)
**अन्तर्लोमः (प्रावारः= चादर)**

व्याघ्रस्य पादौ= व्याघ्रपादौ (ष.त)
व्याघ्रपादौ इव पादौ यस्य सः
व्याघ्रपाद औ + पाद औ
(सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च)
व्याघ्र+ पाद
व्याघ्र+ पाद्
**व्याघ्रपात्-द्**

द्वौ पादौ यस्य सः=द्विपात्-द्
सु= शोभनौ, पादौ यस्य सः= सुपात्-द्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# बहुव्रीहौ समासान्तप्रत्ययः

लघुसिद्धान्तकौमुद्याम्
(बहुव्रीहिसमासः)

{मूलपाठः}

❖ समासान्त-लोप-विधायकं विधिसूत्रम्—

**सूत्रम्— उद्विभ्यां काकुदस्य (५,४.१४८)**

अर्थः— लोपः स्यात्।

○ उत्काकुत्। विकाकुत्॥

❖ समासान्त-लोप-विधायकं विधिसूत्रम्—

**सूत्रम्— पूर्णाद्विभाषा (५,४.१४९)**

अर्थः— पूर्णात् परस्य काकुदस्य लोपो वा स्यात् समासान्तो बहुव्रीहौ।

○ पूर्णकाकुत्। पूर्णकाकुदः॥

❖ हृदयस्य हृद्-निपातनार्थं सूत्रम्—

**सूत्रम्— सुहृद्दुर्हृदौ मित्रामित्रयोः (५,४.१५०)**

अर्थः— सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते।

○ सुहृन्मित्रम्। दुर्हृदमित्रः॥

उद्गतं काकुदं यस्य सः
उद्गत सुँ+ काकुद् सुँ
(प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः)
उत्+ काकुद्
उत्काकुत्-द्

विगतं/विकृतं/विशिष्टं काकुदं यस्य सः

पूर्ण काकुदं यस्य सः

सु= शोभनं, हृदयं यस्य सः= सुहृत्-द्

दुः= दुष्टम्, हृदयं यस्य सः= दुहृत्-द्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# बहुव्रीहौ समासान्त-कप्-प्रत्ययः

लघुसिद्धान्तकौमुद्याम्
(बहुव्रीहिसमासः)

{मूलपाठः}

❖ कप्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— उरः प्रभृतिभ्यः कप् (५,४.१५१)

अर्थः— उरः प्रभृत्युत्तरपदाद् बहुव्रीहेः समासान्तः कप्-प्रत्ययः स्यात्।

उरस्, सर्पिस्, उपानह्, पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः, दधि, मधु, शालि। (ग.सूत्रम्— अर्थान्नञः)

❖ सकार-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— सोऽपदादौ (८,३.३८)

अर्थः—पाश-कल्प-क-काम्येषु विसर्गस्य सः॥

○ इति सः— व्यूढोरस्कः॥

❖ षकार-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— इणः षः (८,३.३९)

अर्थः— इण उत्तरस्य विसर्गस्य षः पाश-कल्प-क-काम्येषु परेषु।

○ प्रियसर्पिष्कः॥

❖ षकार-सकारादेशार्थं विधिसूत्रम्—

सूत्रम्— कस्कादिषु च (८,३.४८)

अर्थः— एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः। *

*अत्र सूत्राणां क्रमः क्वचिद् संस्करेणु भिन्नः दृश्यते।

व्यूढम् =विशालम् उरो=वक्षः यस्य सः
व्यूढ सुँ+ उरस् सुँ
व्यूढोरस्+ कप्
व्यूढोरः+ क
व्यूढोरस्क+ सुँ
**व्यूढोरस्कः**

प्रियं सर्पिर्=घृतं यस्य सः
प्रिय सुँ+ सर्पिस् सुँ
प्रियसर्पिस्+ कप्
प्रियसर्पिर्+ क
प्रियसर्पिः+ क
प्रियसर्पिष्क+ सुँ
**प्रियसर्पिष्कः**

# बहुव्रीहिसमासस्य परीक्षणम्

**०१. अयं भेदः बहुव्रीहिसमासस्य नास्ति—**

क. व्यधिकरणः

ख. समानाधिकरणः

ग. प्रादिबहुव्रीहिः

**घ. उपपदबहुव्रीहिः**

**०२. बहुव्रीहिसमासः भवति —**

क. प्रायः पूर्वपदार्थस्य प्राधान्ये।

**ख. प्रायः अन्यपदार्थस्य प्राधान्ये।**

ग. प्रायः उभयपदार्थस्य प्राधान्ये।

घ. प्रायः उत्तरपदार्थस्य प्राधान्ये।

**०३. 'सप्तमीविशेषणे बहुव्रीहौ' अनेन सूत्रेण किं न भवति—**

क. बहुव्रीहिसमासः

**ख. सप्तम्याः अलुक्**

ग. बहुव्रीहौ सप्तम्यन्तस्य पूर्वप्रयोगः

घ. बहुव्रीहौ विशेषणस्य पूर्वप्रयोगः

**०४. एतेष्वधिकारसूत्रं वर्तते—**

क. हलन्तात्सप्तम्याः संज्ञायाम्

ख. सप्तमीविशेषणे बहुव्रीहौ

ग. अनेकमन्यपदार्थे

**घ. शेषो बहुव्रीहिः**

**०५. 'कण्ठेकालः' इति कस्य सञ्ज्ञा ?**

**क. शिवस्य**

ख. यमस्य

ग. कोकिलस्य

घ. काकस्य

**०६. 'वीरपुरुषकः' इत्यत्र कीदृशो बहुव्रीहिः—**

क. षष्ठीबहुव्रीहिः

ख. पञ्चमीबहुव्रीहिः

ग. द्वितीयाबहुव्रीहिः

**घ. सप्तमीबहुव्रीहिः**

**०७. 'ऊढो रथो येन सः' इत्यस्यालौकिकं विग्रहवाक्यं किम्?**

**क. ऊढ सुँ + रथ सुँ**

ख. ऊढ सुँ + रथ टा

ग. ऊढ सुँ + रथ सुँ + टा

घ. ऊढरथ सुँ + यत् टा

**०८. 'प्रपतितपर्णः' इत्यत्र कः समासः ?**

क. द्वन्द्वः

**ख. बहुव्रीहिः**

ग. तत्पुरुषः

घ. केवलसमासः

**०९. तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्परः ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य............ रूपं स्यात्—**

क. ह्रस्वः

ख. बहुव्रीहिः

**ग. पुंवाचकस्येव**

घ. नपुंसकस्येव

**१०. रूपवद्भार्यः इत्यत्र ह्रस्वः केन —**

क. स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् ...........।

ख. ह्रस्वस्य गुणः।

**ग. गोस्त्रियोरुपसर्जनस्य।**

घ. अप्पूरणीप्रमाण्योः।

**११. 'स्त्री प्रमाणी यस्य सः' इति विग्रहे किं रूपं साधु ?**

**क. स्त्रीप्रमाणः।**

ख. स्त्रीप्रमाणी।

ग. स्त्रीप्रमाणा।

घ. स्त्रीप्रमाण्यः।

**१२. 'त्रिमूर्धः' इत्यत्र कः समासान्तः ?**

क. अप्

**ख. ष**

ग. षच्

घ. कप्

**१३. 'स्थूलाक्षा वेणुयष्टिः' इत्यत्र कः समासान्तः ?**

क. अप्

ख. ष

ग. षच्

**घ. अच्**

**१४. 'त्रि जस् + मूर्धन् जस्' इत्यत्र 'अन्' इत्यस्य लोपः केन सूत्रेण —**

क. षिद्गौरादिभ्यश्च

ख. बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्

**ग. नस्तद्धिते**

घ. द्वित्रिभ्यां ष मूर्ध्नः

**१५. 'अन्तर्लोमः' इत्यत्र कः समासान्तप्रत्ययः ?**

**क. अप्**

ख. ष

ग. षच्

घ. अच्

**१६. 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यनेन कः समासान्तः ?**

क. अप्

ख. कप्

**ग. लोपः**

घ. अच्

**१७. सु= शोभनौ पादौ यस्य सः= .............?**

क. शोभनपादः

ख. सुपदौ

ग. सुपाद

घ. सुपाद्

**१८. एतेषु शुद्धं रूपं चिनुत —**

क. अन्तर्लोम्नः

ख. व्याघ्रपादः

**ग. हस्तिपादः**

घ. विकाकुदः

**१९. पूर्णं काकुदं यस्य सः =...........?**

क. पूर्णकाकुत्।

ख. पूर्णकाकुदः।

**ग. उभौ।**

घ. उभौ न।

**२०. 'व्यूढोरस्कः' इत्यत्र सत्वं केन —**

क. कस्कादिषु च

**ख. सोऽपदादौ**

ग. इणः षः

घ. विसर्जनीयस्य सः

**२१. 'प्रियसर्पिष्कः' इत्यत्र केन कप्समासान्तः ?**

क. इणः षः

ख. कस्कादिषु च

**ग. उरः प्रभृतिभ्यः कप्**

घ. शेषाद्विभाषा

**२२. 'कस्कादिषु च' इति सूत्रेण किं विधीयते—**

क. षत्वम्

ख. सत्वम्

**ग. षत्वम्,सत्वम्।**

घ. लोपः।

**२३. 'युक्तयोगः' इत्यत्र युक्तशब्दस्य पूर्वप्रयोगः केन ?**

क. उरः प्रभृतिभ्यः कप्

ख. शेषाद्विभाषा

ग. अनेकमन्यपदार्थे

**घ. निष्ठा**

**२४. 'महायशाः' इत्यत्र केन सूत्रेण समासः?**

क. शेषाद्विभाषा

**ख. अनेकमन्यपदार्थे**

ग. निष्ठा

घ. प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः

**२५. वामोरूभार्यः इत्यत्र पुंवद्भावः केन** —

क. स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् ...........।

ख. गोस्त्रियोरुपसर्जनस्य।

ग. अप्पूरणीप्रमाण्योः।

**घ. न केनापि।**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# चार्थनिरूपणम्



❖ द्वन्द्वसमासविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— चार्थे द्वन्द्वः (२,२.२९)**

**अर्थः—** अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः।

- समुच्चय-अन्वाचय-इतरेतरयोग-समाहाराश्चार्थाः।
- तत्र 'ईश्वरं गुरुं च भजस्व' इति परस्परनिरपेक्षस्यानेकस्य एकस्मिन्नन्वयः= समुच्चयः।
- 'भिक्षामट गां चानय' इत्यन्यतरस्याऽऽनुषङ्गिकत्वेन अन्वयो=ऽन्वाचयः।
- अनयोरसामर्थ्यात् समासो न।
- 'धवखदिरौ छिन्धि' इति मिलितानामन्वयः= इतरेतरयोगः।
- 'सञ्ज्ञापरिभाषम्' इति समूहः= समाहारः॥

× ईश्वरभजनं न गुरुभजनापेक्षम्। तेन समुच्चयो चार्थः। ईश्वरस्य गुरुपदस्य च चशब्देन एकस्यां भजनक्रियायां क्रमेणान्वयः। ईश्वरं भजस्व गुरुं च भजस्वेत्यर्थ।

× एकस्य (पदार्थस्य) क्रियायामन्वयोत्तरम् अपरस्य आवृत्या तत्रान्वयेन निरपेक्षत्वम्।

× अनुषङ्गादागतः=आनुषङ्गिकः। तस्य भावः आनुषङ्गिकत्वम्= परार्थप्रवृत्तिविषयत्वम्।

× आनुषङ्गिकत्वम्= अनुद्देश्यत्वम्।

× यथा प्रकृतवाक्ये भिक्षार्थम् अटनं प्रधानम्, गवानयनं तु आनुषङ्गिकम्= अप्रधानम्। भिक्षाटने गौर्दृष्टा चेत् ताम आनय इति तात्पर्यम्।

चार्थः → समुच्चयः, अन्वाचयः, इतरेतरयोगः, समाहारः

✓ तिरोहितावयवगतसङ्ख्यः समूहः समाहारः।

✓ अत्र चकारद्वयप्रयोगात् पदयोः परस्परापेक्षया द्योत्यते। परस्परसाहचर्येण तयोः छिदिक्रियायाम् अन्वयः तेनात्र परस्परसाहित्यसत्वात् समर्थत्वेन समासो भवति।

✓ मिलितानां परस्परापेक्षाणाम् उद्भूतावयवभेद-समूहरूपाणाम् एकधर्मावच्छिन्नेऽन्वय इतरेतरयोगः।

# लघुसिद्धान्तकौमुद्याम्
## (द्वन्द्वसमासः)

# द्वन्द्वः

यस्मिन् समासे प्राधान्यमुभयोः स्यात् पदार्थयोः।
स हि द्वन्द्वो द्विधा ज्ञेयो बुधैरिति विनिश्चितः॥

इतरेतरयोगाख्यः समाहाराह्वयस्तथा।
द्वाभ्यां पदाभ्यां बहुभिरुभौ चेति चतुर्विधः॥

### इतरेतरयोगः

- द्विपदः — शिवकेशवौ
- बहुपदः — हरिहरगुरवः

❖ ययोर्बलेन समितौ निहतौ कंसरावणौ।
सूर्याचन्द्रमसोर्वंश्यौ रामकृष्णावहं भजे॥

❖ वापीकूपतडागानां महतां स्थापनादपि।
धर्मार्थकाममोक्षाश्च सिद्धन्त्यत्र न संशयः॥

### समाहारः

- द्विपदः — शीतोष्णम्
- बहुपदः — पाणिपादग्रीवम्

❖ शीतोष्णं सुखदुःखं वा सहमानो हि वर्तते।
नियम्य वाक्त्वचं सम्यक् स हि योगीति कथ्यते॥

❖ ढक्कामृदङ्गपटहं यस्य दध्वान मन्दिरे।
अश्वहस्तिरथं चास्तु भावुकं तस्य भूभृतः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# द्वन्द्वसमासे पूर्वप्रयोगस्य नियमः-१

लघुसिद्धान्तकौमुद्याम् (द्वन्द्वसमासः)

{मूलपाठः}

❖ परप्रयोगार्थं विधिसूत्रम्—

**सूत्रम्—** राजदन्तादिषु परम् (२,२.३१)

**अर्थः—** एषु पूर्वप्रयोगार्हं परं स्यात्।

○ दन्तानां राजानो= राजदन्ताः।*

@**गणसूत्रम्—** धर्मादिष्वनियमः।

○ अर्थधर्मौ। धर्मार्थावित्यादि॥

| | |
|---|---|
| दन्तानां राजानः<br>दन्त आम् + राजन् जस् (षष्ठी समासः)<br>दन्त + राजन्<br>राजन्+दन्त<br>राजदन्त+ जस्= राजदन्ताः | धर्मश्च अर्थश्च<br>धर्म सुँ + अर्थ सुँ (चार्थे द्वन्द्वः)<br>धर्म + अर्थ<br>धर्मार्थ+ औ<br>धर्मार्थौ, अर्थधर्मौ। |

* ‘दन्तानां राजा राजदन्तः’ क्वचित् संस्करणेषु पाठः।

@ क्वचित् संस्करणेष्विदं वार्तिकरूपेणोदाहृतम्।

१ राजदंतः। अग्रेवणम्। लिप्तवासितम्। नग्नमुषितम्। सिक्तसंमृष्टम्। मृष्टलुञ्चितम्। अवक्लिन्नपक्वम्। अर्पितोप्तम्। उप्तगाढम्। उलूखलमुसलम्। तण्डुलकिण्वम्। दृषदुपलम्। आरग्वायनबन्धकी। चित्ररथबाह्लीकम्। अवन्त्यश्मकम्। शूद्रार्यम्। स्नातकराजानौ। विष्वक्सेनार्जुनौ। अक्षिभ्रुवम्। दारगवम्। शब्दार्थौ। धर्मार्थौ। कामार्थौ। अर्थशब्दौ। अर्थधर्मौ। अर्थकामौ। वैकारिमतम्। गोजवाजम्। गोपालधानीपूलासम्। पूलासककुरण्डम्। स्थूलपूलासम्। उशीरबीजम्। जिह्वास्थि। सिञ्जास्थम्। चित्रास्वाती। भार्यापती। दम्पती। जम्पती। जायापती। पुत्रपती। पुत्रपशु। केशश्मश्रु। शिरोबीजम्। शिरोजानु। सर्पिर्मधुनी। मधुसर्पिषी। आद्यन्तौ। अन्तादी। गुणवृद्धी। वृद्धिगुणौ। आकृतिगणोऽयम्। धर्मादिगणस्तु राजदंताद्यन्तर्गत एव—धर्मादिगणका समावेश राजदन्तादि गणमें है।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# द्वन्द्वसमासे पूर्वप्रयोगस्य नियमः-२

लघुसिद्धान्तकौमुद्याम्
(द्वन्द्वसमासः)

{मूलपाठः}

❖ पूर्वप्रयोगार्थं विधिसूत्रम्—

सूत्रम्— द्वन्द्वे घि (२,२.३२)

अर्थः— द्वन्द्वे घिसंज्ञं पूर्वं स्यात्।

○ हरिश्च हरश्च= हरिहरौ॥

❖ पूर्वप्रयोगार्थं विधिसूत्रम्—

सूत्रम्— अजाद्यदन्तम् (२,२.३३)

अर्थः— (अजाद्यदन्तं पदं) द्वन्द्वे पूर्वं स्यात्।

○ ईशकृष्णौ॥

❖ पूर्वप्रयोगार्थं विधिसूत्रम्—

सूत्रम्— अल्पाच्तरम् (२,२.३४)

अर्थः— अल्प-अच्तरं पदं द्वन्द्वे पूर्वं स्यात्।

○ शिवकेशवौ॥

हरिश्च हरश्च
हरि सुँ + हर सुँ (चार्थे द्वन्द्वः)
हरि+ हर
हरिहर+ औ
हरिहरौ

ईशश्च कृष्णश्च
ईश सुँ + कृष्ण सुँ (चार्थे द्वन्द्वः)
ईश+ कृष्ण
ईशकृष्ण+ औ
ईशकृष्णौ

शिवश्च केशवश्च
शिव सुँ + केशव सुँ (चार्थे द्वन्द्वः)
शिव+ केशव
शिवकेशव+ औ
शिवकेशवौ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# द्वन्द्वापवाद-एकशोषस्य विधानम्

## लघुसिद्धान्तकौमुद्याम् (द्वन्द्वसमासः)

{मूलपाठः}

❖ एकशेषविधायकं विधिसूत्रम्—

**सूत्रम्—** पिता मात्रा (१,२.७०)

**अर्थः—** मात्रा सहोक्तौ पिता वा शिष्यते।

○ माता च पिता च= पितरौ, मातापितरौ वा॥

माता च पिता च

(विभक्तेः पूर्वमन्तरङ्गत्वादेकशेषः)

पितृ+ औ

पितर्+ औ

(ऋतो ङि सर्वनामस्थानयोः)

**पितरौ**

माता च पिता च

मातृ सुँ+ पितृ सुँ

मात् आन्+ पितृ

(आनँङ् ऋतो द्वन्द्वे, नलोपः)

वा.अभ्यर्हितं चेति पूर्वप्रयोगः।

मातापितृ+ औ

**मातापितरौ**

१६३० । त्यदादीनि सर्वैर्नित्यम् । (१-२-७२)

सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । यथा—

स च देवदत्तश्च तौ । अयं च देवदत्तश्च इमौ ।

त्वं च सर्वे लोकाश्च यूयम् । अहं च ग्रामजनाश्च वयम् ।

त्यदादीनां मिथस्सहोक्तौ परं परं शिष्यते ।

स चायं च इमौ । अयं च त्वं च युवाम् । त्वं चाहं च आवाम् ।

भवन्तश्च भवत्यश्च = भवन्तः

यूयं च वयं च= वयम्

पुमान् स्त्रिया । (१-२-६७)

स्त्रिया सहोक्तौ पुमान् शिष्यते, स्त्रीपुंसलक्षणश्चेदेव विशेषः ।

कुक्कुटश्च कुक्कुटी च कुक्कुटौ । युवा च युवतिश्च युवानौ ।

१६२६ । भ्रातृपुत्रौ स्वसृदुहितृभ्याम् । (१-२-६८)

भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ ।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# द्वन्द्वे-एकवद्भावस्य विधानम्

लघुसिद्धान्तकौमुद्याम्
(द्वन्द्वसमासः)

{मूलपाठः}

❖ एकवद्भावविधायकं विधिसूत्रम्—

**सूत्रम्—** द्वन्द्वश्च प्राणि-तूर्य-सेनाङ्गानाम् (२,४.२)

**अर्थः—** एषां द्वन्द्व एकवत्।

- पाणिपादम्।
- मार्दङ्गिकवैणविकम्।
- रथिकाश्वारोहम्।

पाणी च पादौ च
पाणि औ+ पाद औ
पाणिपाद+ सुँ/अम्
**पाणिपादम्**



मार्दङ्गिकाश्च वैणविकाश्च
मार्दङ्गिक जस्+वैणविक जस्
मार्दङ्गिकवैणविक+ सुँ/अम्
**मार्दङ्गिकवैणविकम्**





रथिकाश्च अश्वारोहश्च
रथिक जस् + अश्वारोह जस्
रथिकाश्वरोह+ सुँ/अम्
**रथिकाश्वारोहम्**





१६३५ । येषां च विरोधः शाश्वतिकः । (२-४-९)
मार्जारमूषकम् । श्वसृगालम् । अहिनकुलम् । काकोलूकम् ।

१६३८ । विप्रतिषिद्धं चानधिकरणवाचि । (२-४-१३)
परस्परविरुद्धानामद्रव्यवाचिनां च द्वन्द्वो वैकवत् । यथा—
शीतोष्णं,–ष्णे । सुखदुःखं,–खे । जीवितमरणं,–णे ।
द्रव्यवाचित्वे तु शीतोष्णे उदके इत्येव ॥

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# द्वन्द्वे-समासान्तप्रत्ययस्य विधानम्

लघुसिद्धान्तकौमुद्याम् (द्वन्द्वसमासः)

{मूलपाठः}

❖ समासान्त-टच् विधायकं विधिसूत्रम्—

**सूत्रम्—** द्वन्द्वाच्चुदषहान्तात्समाहारे (५,४.१०६)

**अर्थः—** चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे।

- वाक् च त्वक् च= वाक्त्वचम्।
- त्वक्स्रजम्।
- शमीदृषदम्।
- वाक्त्विषम्।
- छत्रोपानहम्।
- समाहारे किम्? प्रावृट्शरदौ॥

॥ इति द्वन्द्वः॥

शमी च दृषच्चानयोः समाहारः

वाक् च त्विट् चानयोः समाहारः

छत्रं च उपानत् चानयोः समाहारः

चवर्गः- द्- ष्- ह्-अन्तात्

समासान्त- टच्

वाक् च त्वक् चानयोः समाहारः
वाच् सुँ+ त्वच् सुँ
वाक्त्वच्+ टच् (अ)
वाक्त्वचम्

त्वक् च स्रक् चानयोः समाहारः
त्वच् सुँ+ स्रज् सुँ
त्वक्स्रज्+ टच् (अ)
त्वक्स्रजम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# समासान्त-अ-प्रत्ययस्य विधानम्

लघुसिद्धान्तकौमुद्याम् (समासान्ताः)

❖ समासान्त-अ-प्रत्ययविधायकम् विधिसूत्रम्—

**सूत्रम्—** ऋक्पूरब्धूःपथामानक्षे (५,४.७४)

- अ+ अनक्षे इतिच्छेदः।

**अर्थः—** ऋगाद्यन्तस्य (ऋच्, पुर्, अप्, धुर्, पथिन्) समासस्य अप्रत्ययोऽन्तावयवः स्यात्,अक्षे या धूस्तदन्तस्य तु न।

- अर्धर्चः।
- विष्णुपुरम्।
- विमलापं सरः।
- राजधुरा।
- अक्षे तु— अक्षधूः। दृढधूरक्षः।
- सखिपथः। रम्यपथो देशः॥

{मूलपाठः}

ऋचोऽर्धम्
ऋच् ङस्+ अर्ध सुँ
(अर्ध नपुंसकम्, तत्पुरुषः)
अर्ध+ ऋच् + अ
अर्धर्च+ सुँ
अर्धर्चः, अर्धर्चम्

विष्णोः पूः
विष्णु ङस्+ पुर् सुँ
(षष्ठी, तत्पुरुषः)
विष्णुपुर्+ अ
विष्णुपुर+ सुँ
विष्णुपुरम्

विमला आपो यत्र तत्
विमला जस्+ अप् जस्
(अनेकमन्यपदार्थे, बहुव्रीहिः)
विमलाप्+ अ
विमलाप+ सुँ/अम्
विमलापम्

राज्ञो धूः (कार्यभारः)
राजन् ङस्+ धुर् सुँ
(षष्ठी, तत्पुरुषः)
राजन् धुर्+ अ
राजधुर+ टाप् सुँ
राजधुरा

सख्युः पन्थाः
सखि ङस्+ पथिन् सुँ
(षष्ठी, तत्पुरुषः)
सखिपथिन्+ अ
(भस्य टेर्लोपः)
सखिपथ+ सुँ
सखिपथः

अक्षस्य धूः (मध्यभागः)
अक्षधूः
दृढा धूर्यस्य
दृढधूः= अक्षः

रम्याः पन्थानो यस्मिन्/यस्य सः
रम्यपथो

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# समासान्त-अच्-प्रत्ययस्य विधानम्

## लघुसिद्धान्तकौमुद्याम् (समासान्ताः)

{मूलपाठः}

❖ अच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** अक्ष्णोऽदर्शनात्(५,४.७६)

**अर्थः—** अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः।

○ गवामक्षीव= गवाक्षः॥

❖ अच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** उपसर्गादध्वनः (५,४.८५)

**अर्थः—** उपसर्गात् परो यः अध्वशब्दः तस्मात् अच् स्यात् समासे।

○ प्रगतोऽध्वानं प्राध्वो रथः॥

❖ समासान्तप्रत्ययनिषेधकं विधिसूत्रम्—

**सूत्रम्—** न पूजनात् (५,४.६९)

**अर्थः—** पूजनार्थात्परेभ्यः समासान्ता न स्युः।

**भाष्येष्टिः—** स्वतिभ्यामेव। (चेन्नै संस्करणे इदं वार्तिकरूपेण पठितम्) (बहुषु संस्करणेषु इदं नास्ति।)

○ सुराजा। अतिराजा॥

॥ इति समासान्ताः॥

---

गवाम् अक्षि-इव
गो आम्+ अक्षि सुँ
(षष्ठी, तत्पुरुषः)
ग् अवङ् अक्षि+
(अवङ् स्फोटायनस्य)
गवाक्षि+ अ
गवाक्ष्+ अ
गवाक्ष+ सुँ
(यस्येति च)
गवाक्षः

---

ब्राह्मणस्य अक्षि
ब्राह्मणाक्षि

---

प्रगतोऽध्वानम्
प्र (गत) + अध्वन् अम्
(अत्यादयः क्रान्ताद्यर्थे द्वितीयया)
प्राध्वन्+ अच्
(नस्तद्धिते)
प्राध्व+ सुँ
प्राध्वः (रथः)

---

सु= शोभनो राजा
(कुगतिप्रादयः)
(राजाहःसखिभ्यश्च टच्)
सुराजा

---

अतिशयितो राजा
(कुगतिप्रादयः)
(राजाहःसखिभ्यश्च टच्)
अतिराजा

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# समासस्य / विग्रहस्य निर्णयः कथम्

## लघुसिद्धान्तकौमुद्याम् (समासान्ताः)



समासयुक्तं पदं दृष्ट्वा आदौ अर्थानुसन्धानं कृत्वा विग्रहवाक्यं वक्तव्यम्।



ततः तस्मिन् विग्रहवाक्ये समासविधायकं सूत्रम् अन्वेष्टव्यम्।



ततः समासः निश्चेतव्यः।

- ✓ यथा ‘लोकनाथः’ इति समस्तं पदम्। अस्यार्थः— **‘लोकस्य नाथः’** (लोक का नाथ) अर्थात् राजा। अथवा **‘लोकः नाथः= पालकः यस्य सः’** ( संसार है पालने वाला जिसका) अर्थात् भिक्षुकः।
- ✓ विग्रहः—‘लोक ङस्+ नाथ सुँ **(सूत्रम्— षष्ठी)**। ‘लोक सुँ+ नाथ सुँ **(सूत्रम्— अनेकमन्यपदार्थे)**।
- ✓ ‘लोकस्य नाथ’ इत्यत्र **षष्ठीतत्पुरुषः**। ‘लोकः नाथः यस्य सः’ इत्यत्र **बहुव्रीहिः**।

अहं च त्वं च राजेन्द्र! लोकनाथावुभावपि। बहुव्रीहिरहं राजन्! षष्ठीतत्पुरुषो भवान्॥

# बहुषु पदेषु समासकरणरीतिः



❖ समासः प्रायः द्वयोः पदयोः भवति। बहुषु पदेषु द्वयोः पदयोः समासं कृत्वा तदैव तस्य समस्तस्य पदस्य अग्रिमपदेन सह समासो भवति। यथा 'राजपुरुषगृहद्वारमध्ये' इत्यत्र पञ्च पदानि सन्ति। अत्र विग्रहः प्रकारः— राज्ञः पुरुषः= राजपुरुषः, राजपुरुषस्य गृहं = राजपुरुषगृहम्, राजपुरुषगृहस्य द्वारं= राजपुरुषगृहद्वारम्, राजपुरुषगृहद्वारस्य मध्यम्= राजपुरुषगृहद्वारमध्यम्, तस्मिन् राजपुरुषगृहद्वारमध्ये इति।

**समासस्य मध्ये समासे कृते तस्य समासस्य का सञ्ज्ञा ?**

❖ समासस्य मध्ये समासः पतति चेद् 'गर्भ'इति पदं तत्र विग्रहवाक्ये प्रदीयते। यथा— 'सर्वगुणसम्पन्नः' इत्यत्र सर्वगुणमध्ये सर्वे च ते गुणाः= सर्वगुणाः (कर्मधारयः) ततः सर्वगुणैः सम्पन्नः= सर्वगुणसम्पन्नः (तृतीया तत्पुरुषः)। इत्थम् आहत्य अत्र 'कर्मधारयगर्भतृतीयातत्पुरुषः' इति वक्तुं युक्तम्। तथैव वाक्च अर्थश्च= वागर्थौ, वागर्थयोः प्रतिपत्तिः= वागर्थप्रतिपत्तिः, तस्यै= वागर्थप्रतिपत्तये।

**चकारबहुलो द्वन्द्वः स चासौ कर्मधारयः। यस्य येन बहुव्रीहिः शेषः तत्पुरुषः स्मृतः॥**

# द्वन्द्वसमासान्तयोः परीक्षणम्

**०१. चार्थाः कति भवन्ति—**

क. पञ्च

ख. त्रयः

ग. द्वौ

**घ. चत्वारः**

**०२. 'धवखदिरौ छिन्धि' इति कस्योदाहरणम् ?**

क. समाहारस्य

**ख.इतरेतरयोगस्य**

ग. समुच्चयस्य

घ. अन्वाचयस्य

**०३. परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः...............?**

क. अन्वाचयः

ख. समाहारः

ग. इतरेतरयोगः

**घ. समुच्चयः**

**०४. 'सञ्ज्ञापरिभाषम्' इति कस्योदाहरणम् ?**

**क.समाहारस्य**

ख. इतरेतरयोगस्य

ग. समुच्चयस्य

घ. अन्वाचयस्य

**०५. 'राजदन्तः' इत्यत्र कः समासः ?**

क. द्वन्द्वः

ख. बहुव्रीहिः

**ग. तत्पुरुषः**

घ. केवलसमासः

**०६. एतेष्वशुद्धं रूपं चिनुत—**

क. धर्मार्थौ

ख. अर्थधर्मौ

**ग. हरहरी**

घ. हरिहरौ

**०७. 'शिवकेशवौ' इत्यत्र पूर्वप्रयोगस्य कः नियमः?**

क. द्वन्द्वे घि

ख. अजाद्यन्तम्

**ग. अल्पाच्चतरम्**

घ. अभ्यर्हितं च

**०८. माता च पिता च इति विग्रहे किं रूपं साधु ?**

क. पितरौ

ख. मातापितरौ

**ग. पूर्वोक्ते द्वे**

घ. मातरौ

**०९. 'पाणी च पादौ च' इति विग्रहे किं रूपं साधु ?**

**क. पाणिपादम्**

ख. पाणीपादम्

ग. पाणिपादौ

घ. पाणिपादाः

**१०. 'सेनाङ्गानां समासः एकवद्भवति' इत्यस्य किमुदाहरणम् ?**

क. मार्दङ्गिकवैणविकम्।

**ख. रथिकाश्वारोहम्।**

ग. पाणिपादम्।

घ. शीतोष्णम्।

**११. 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति सूत्रेण कस्मात् समासान्तप्रत्ययो न विधीयते —**

क. हान्तात्

ख. षान्तात्

ग. चान्तात्

**घ. टान्तात्**

**१२. 'टच्'समासान्तस्योदाहरणं नास्ति—**

**क. प्रावृट्शरदौ**

ख. शमीदृषदम्।

ग. वाक्त्विषम्।

घ. छत्रोपानहम्।

**१३. 'टच्'समासान्त कस्मिन् समासे नास्ति—**

क. अव्ययीभावे

ख. द्वन्द्वे

ग. तत्पुरुषे

**घ. बहुव्रीहौ**

**१४. 'युक्तयोगः' इत्यत्र युक्तशब्दस्य पूर्वप्रयोगः केन सूत्रेण—**

क. अजाद्यदन्तम्

ख. अल्पाच्चतरम्

ग. अभ्यर्हितञ्च

**घ. निष्ठा**

**१५. 'ऋक्पूरब्धूःपथामानक्षे'इति सूत्रेण कः समासान्तप्रत्ययो भवति ?**

**क. अ**

ख. अप्

ग. टच्

घ. अच्

**१६. 'राज्ञो धूः' इत्यत्र धूशब्दस्य कोऽर्थः?**

क. चक्रम्

ख. धुरा

**ग. कार्यभारः**

घ. सेना

**१७. 'ऋक्पूरब्धूःपथामानक्षे' इत्यनेन एषूदाहरणेषु कुत्र समासान्तो न भवति—**

क. विष्णुपुरम्।

ख. राजधुरा।

**ग. अक्षधूः।**

घ. सखिपथः।

**१८. 'रम्यपथः' इत्यत्र कः समासः ?**

क. अव्ययीभावः।

ख. द्वन्द्वः।

ग. तत्पुरुषः।

**घ. बहुव्रीहिः।**

**१९. 'उपसर्गादध्वनः' इति सूत्रेण कः समासान्तप्रत्ययः —**

क. अ

ख. अप्

ग. टच्

**घ. अच्**

**२०. 'प्राध्वः' इत्यत्र कः समासः ?**

क. अव्ययीभावः।

ख. द्वन्द्वः।

**ग. तत्पुरुषः।**

घ. बहुव्रीहिः।

**२१. एतेषु कुत्र समासान्तप्रत्ययो नास्ति —**

क. गवाक्षः

**ख.सुराजा**

ग. अर्धर्चः

घ. विमलापम्

**२२. सखिपथिन्+ अ = सखिपथः इत्यत्र नकारलोपः केन सूत्रेण ?**

क. नस्तद्धिते

ख. नलोपः प्रातिपदिकान्तस्य

**ग. भस्य टेर्लोपः**

घ. षड्भ्यो लुक्

**२३. ‘गवाक्षः’इति विषये इदं कथनं सङ्गतं नास्ति—**

क. अत्र षष्ठीतत्पुरुषसमासः।

ख. अत्र समासान्तः ‘अच्’ प्रत्ययोऽस्ति।

ग. अत्राक्षि पदं अक्षिसदृशे वातायनेऽर्थे लाक्षणिकम्।

**घ. अत्र ‘अक्षि’शब्दः नेत्रार्थे वर्तते।**

**२४. ‘सर्वगुणसम्पन्नः’ इत्यत्र कः समासः ?**

क. बहुव्रीहिः

**ख.कर्मधारयगर्भतृतीयातत्पुरुषः**

ग. तृतीयातत्पुरुषगर्भकर्मधारयः

घ. द्वन्द्वः

**२५. ‘मदालसा’ इत्यत्र कः समासः—**

क. चतुर्थीतत्पुरुषः

**ख.तृतीयातत्पुरुषः**

ग. कर्मधारयः

घ. बहुव्रीहिः